# संदेश

विद्यालयी शिक्षा में शैक्षिक उत्कृष्टता प्राप्त करना केन्द्रीय विद्यालय संगठन की सर्वोच्च वरीयता है। हमारे विद्यार्थी, शिक्षक एवं शैक्षिक नेतृत्वकर्ता निरंतर उन्नति हेतु प्रयासरत रहते हैं। राष्ट्रीय शिक्षा नीति 2020 के संदर्भ में योग्यता आधारित अधिगम एवं मूल्यांकन संबन्धित उद्देश्यों को प्राप्त करना तथा सीबीएसई के दिशा निर्देशों का पालन, वर्तमान में इस प्रयास को और भी चुनौतीपूर्ण बनाता है।

केन्द्रीय विद्यालय संगठन के पांचों **आंचलिक शिक्षा एवं प्रशिक्षण संस्थान** द्वारा संकलित यह 'विद्यार्थी सहायक सामाग्री' इसी दिशा में एक आवश्यक कदम है । यह सहायक सामग्री कक्षा 9 से 12 के विद्यार्थियों के लिए सभी महत्वपूर्ण विषयों पर तैयार की गयी है । केन्द्रीय विद्यालय संगठन की 'विद्यार्थी सहायक सामग्री' अपनी गुणवत्ता एवं परीक्षा संबंधी सामाग्री-संकलन की विशेषज्ञता के लिए जानी जाती है और अन्य शिक्षण संस्थान भी इसका उपयोग परीक्षा संबंधी पठन सामग्री की तरह करते रहे हैं । शुभ-आशा एवं विश्वास है कि यह सहायक सामग्री विद्यार्थियों की सहयोगी बनकर सतत मार्गदर्शन करते हुए उन्हें सफलता के लक्ष्य तक पहुंचाएगी ।

शुभाकांक्षा सहित ।

निधि पांडे
आयुक्त, केन्द्रीय विद्यालय संगठन

**प्रभारी एवं संयोजक:** श्री अखिलेश्वर झा, प्राचार्य, के.वि.एन.टी.पी,सी., बदरपुर (दिल्ली संभाग)

**पुनरीक्षण:** के.वि.सं. शिक्षा एवं प्रशिक्षण का आंचलिक संस्थान चंडीगढ़

श्री संदीप कुमार, टी.जी.टी. (संस्कृत), के.वि. सेक्टर-29 ओ.सी.एफ. चंडीगढ़ (चंडीगढ़ संभाग)

# अनुक्रमणिका

## कक्षा – दशमी
## संस्कृतम् (सम्प्रेषणात्मकम्) कोड् सङ्ख्या - 119
## पाठ्यक्रमः परीक्षानिर्देशाश्च (2024-25)

या अन्तस्स्थले विद्यमानान् विविधविचारान् भावान् विविधाः अनुभूतीः च सार्थकैः ध्वनिभिः लिखितैः सङ्केतैः च प्रकटयति व्यक्तीकरोति सा भाषा। वस्तुतः भाषा अभिप्रायप्रकटनस्यैव विशिष्टं साधनं वर्तते। समाजे जनानां परस्परं भावग्रहणाय, भावविनिमयाय भावावबोधनाय च भाषा एव सरलतमं स्पष्टतमं च साधनं विद्यते। संसारे द्विसहस्राधिकभाषाः अधुना जनैः प्रयुज्यन्ते यासु गीर्वाणभाषा देववाणी संस्कृतभाषा प्राचीनतमा समृद्धा चास्ति। अस्यामेव भाषायां चतुर्भिः वेदैः षड्वेदाङ्गैः च सुसम्पन्नाः चतुर्दशविद्याः, विज्ञानम्, आयुर्वेदः, गणितं योगशास्त्रादयश्च ग्रन्थाः सुनिबद्धाः विद्यन्ते। एतेन अनुमातुं शक्यते यत् संस्कृतं केवलं भावप्रकटीकरणस्य विचारविनिमयस्य च माध्यमः एव न अपितु एकं विशिष्टं जीवनदर्शनम् अपि विद्यते। इतिहासः प्रमाणमत्र यत् सृष्टेः आदितः अद्यावधि यत् शिक्षणं ज्ञानविज्ञानं च अस्ति तत् सर्वम् अस्यां भाषायामेव अतीव वैज्ञानिकविधिना सन्निहितम् अस्ति। मनसः गहनातिगहनभावानां विविधविचाराणां च स्पष्टतया प्रकटीकरणार्थं संस्कृतं विना अन्यत्र नैव विद्यते वैशिष्ट्यम्। भारतीयं सर्वस्वं विश्वस्य समग्रं तत्त्वं च अस्यां भाषायाम् अस्ति।

संस्कृतस्य भाषावैज्ञानिकत्वम् - ऐतिहासिक-वर्णनात्मक-तुलनात्मकाध्ययन-द्वारा भाषायाः प्रकृतेः विकासोत्पत्तेः संरचनायाः अध्ययनपूर्वकं सर्वेषां विषयाणां सैद्धान्तिकः निर्णयः भाषाविज्ञानेन क्रियते। भाषाविज्ञान-नामकशास्त्रे शब्दानाम् उत्पत्तिः, वाक्यानां संरचना इत्यादीनां विषयाणां विचारः क्रियते। भाषाविज्ञानस्य सम्बन्धः सर्वेषां मानवानां भाषाभिः सह अस्ति। एवं भाषाविज्ञाने ध्वनेः, ध्वनि-उच्चारणोपयोगिनां स्वरयन्त्रमुखजिह्वादि-अङ्गानां प्रकृति-प्रत्ययादीनां, संज्ञासर्वनाम-क्रिया-विशेषणादीनां नामाख्यात-उपसर्जननिपातानां पदपदार्थविषयकाणां विकारादीनां विकारमूलककारकाणाम् अन्येषां विविधविषयाणाञ्च अध्ययनं क्रियते। भाषाविज्ञाने संस्कृतभाषा-विषयक-वर्णोत्पत्ति-सिद्धान्तस्य अतीव वैज्ञानिकं निरूपणं कृतं वर्तते।

विश्वस्य सर्वासु भाषासु संस्कृतभाषा प्राचीनतमा अस्ति। प्रायः सर्वासु भाषासु संस्कृतपरकशब्दाः उपलभ्यन्ते। संस्कृतभाषा भारतीयभाषाणां जननी इति कथ्यते। सर्वासु भारतीयभाषासु संस्कृतभाषा अन्तर्लीना अस्ति इति सर्वे अङ्गीकुर्वन्ति।

भारतदेशः बहुभाषी देशोऽस्ति। अस्मिन् देशे अनेकतायाम् एकतावर्धिनी भाषेयं सामाजिकसमरसतायै जीवनविकासाय च आवश्यकी वर्तते। संस्कृतस्य सांस्कृतिकं महत्त्वं वर्णयन्तः विद्वांसः कथयन्ति "भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा, संस्कृतिमूलं संस्कृतम्, साहित्यं संस्कृतिवाहकञ्च इति।" एषा संस्कृतिः न केवलं भारतस्य अपि तु विश्वस्य मुकुटायमाना अस्ति। उक्तं च-

सत्यमहिंसादिगुणैः श्रेष्ठा विश्वबन्धुत्वशिक्षिका।
विश्वशान्तिः सुखधात्री भारतीया हि संस्कृतिः॥

संस्कृतस्य व्यापकत्वं ज्ञायते अनेन पद्येन -

संस्कृते संस्कृतिर्ज्ञेया संस्कृते सकलाः कलाः।
संस्कृते सकलं ज्ञानं संस्कृते किन्न विद्यते॥

एवं संस्कृतभाषा परिनिष्ठिता, दोषरहिता, सरला, गभीरा, यथार्था वैज्ञानिकी च भाषा अस्ति। सम्प्रति युगेऽस्मिन् प्रमुखैः उद्देश्यैः संस्कृतभाषा शिक्षणीया अस्ति।

**शिक्षणोद्देश्यानि –**

* वसुधैव-कुटुम्बकम् इति भावनाविकासः।
* भारतीयभाषाणां संरक्षणम्।
* संस्कृतभाषया सम्प्रेषणकौशलविकासः।
* परस्परं संस्कृतसम्भाषणेन भावविनिमयः।
* संस्कृत-भाषया एव संस्कृत-शिक्षणम्।
* श्रवण-भाषण-पठन-लेखनेति चतुर्णां भाषिक-कौशलानां विकासः।
* बौद्धिकविकासपुरस्सरम् आध्यात्मिकनैतिकज्ञानम्।
* मानसिकविकासानन्दानुभूतिः रसानुभूतिश्च।
* भारतीयसंस्कृतेः संरक्षणं ज्ञानवर्धनञ्च।
* आत्मानुशासनसंस्थापनम्।
* भाषाशिक्षणकौशलानि वर्धनाय नैपुण्यप्राप्तिः।
* संस्कृतसाहित्यस्य अध्ययनेन ज्ञानानन्दस्य अनुभूतिः।
* मानवजीवनस्य विकासपूर्वकं कल्याणम्।
* संस्कृतभाषया छात्राणां सर्वविधविकासः।

**शिक्षणप्रविधयः -**

* संस्कृतमाध्यमेन सम्भाषणविधिना शनैः शनैः संस्कृत-शिक्षणं सम्भविष्यति। गतिवर्धनाय संस्कृताध्यापकैः धैर्येण स्वकीयाध्यापन-कार्यक्रमाणां नियोजनम्। रुचिकरभाषाभ्यासेन भाषिकोपलब्धिः। भाषिकाभ्यासाय वार्तालाप-कथाश्रवण-वादविवाद-संवाद-वर्णनपरक-प्रतियोगिताभिः भाषाशिक्षणं कारयितुं शक्यते।
* विभिन्नप्रामाणिकसंस्थानां कार्यक्रमाः साहित्यसामग्र्यश्च प्रयुज्य उत्तमशिक्षणं कर्तुं शक्यते।
* संस्कृतभाषया उपलब्ध-दृश्य-श्रव्य-सामग्री-माध्यमेन भाषाभ्यासः।
* विभिन्नपाठ्यसामग्रीद्वारा शिक्षकः स्वकीयं शिक्षणकार्यं रुचिकरं कर्तुं शक्नोति।
* भाषाशिक्षकः छात्रान् स्नेहपूर्वकम् (आत्मीयभावेन) पाठयेत्।
* अद्यतनपूर्वकं साहित्यकोश-शब्दकोश-सन्दर्भग्रन्थानां सहायतया छात्राणां तत्परतावर्धनम्।
* प्राचीनार्वाचीनयोर्मध्ये समन्वयस्थापनद्वारा नूतनशिक्षणविधिभिश्च संस्कृतशिक्षणम्।
* सङ्गणकमाध्यमेन अन्तर्जाले विद्यमानसामग्रीभिश्च संस्कृतशिक्षणम्।

**कौशलानि-**

* ज्ञानात्मक-अवबोधनात्मक-अनुप्रयोगात्मक-विश्लेषणात्मक-संश्लेषणात्मक-मूल्याङ्कनात्मक-लक्षिताधिगमनविशेषाः।
* **श्रवणकौशलम्** – भावाधिग्रहणाय ध्वन्यात्मकं भाषायाः प्रथमं कौशलम् इदम्। अस्य साधनानि - गुरुमुखम्, आकाशवाणी, दूरवाणी, परिवारसदस्याः, समाजः, कक्ष्याः, ध्वनिमुद्रणयन्त्रम्, दूरदर्शनम् इत्यादीनि।

* **भाषणकौशलम्**- भावाभिव्यक्तये ध्वन्यात्मकं भाषायाः इदं द्वितीयं कौशलम्। वाग्-रूपं भावप्रकटनम् एव भाषणम्, परिसरप्रभावेण आधारेण वा भाषणशक्तिः जायते।
* **पठनकौशलम्** – भावाधिग्रहणाय लिप्यात्मकं भाषायाः तृतीयं कौशलम् इदम्। (अर्थग्रहणपूर्वकं स्पष्टरूप-वाचनम् इत्यर्थः।)
* **लेखनकौशलम्** - भावाभिव्यक्तये लिप्यात्मकं भाषायाः चतुर्थं कौशलम् इदम्। (ध्वनिरूपेण विद्यमानं भाषांशं लिपिरूपेण अवतारणं लेखनम् इति उच्यते।)

## कक्षा – दशमी (2024-25)

### संस्कृतम् (सम्प्रेषणात्मकम्) कोड् सङ्ख्या - 119

**आहत्य-अङ्काः** - 80+20

**आहत्य-कालांशाः** – 200

वार्षिकमूल्याङ्कनाय निर्मिते प्रश्नपत्रे चत्वारः भागाः भविष्यन्ति –

| | | | |
|---|---|---|---|
| **'क' भागः** | **अपठितावबोधनम्** | 10 **अङ्काः** | 25 **कालांशाः** |
| **'ख' भागः** | **रचनात्मकार्यम्** | 15 **अङ्काः** | 40 **कालांशाः** |
| **'ग' भागः** | **अनुप्रयुक्तव्याकरणम्** | 25 **अङ्काः** | 55 **कालांशाः** |
| **'घ' भागः** | **पठितावबोधनम्** | 30 **अङ्काः** | 80 **कालांशाः** |

**भागानुसारं विषयाः अङ्कविभाजनं च** **80 अङ्काः**

| **क. सं.** | **विषयाः** | **प्रश्नप्रकाराः** | **मूल्यभारः** |
|---|---|---|---|
| | **'क' भागः** **अपठितावबोधनम्** **10 अङ्काः** | | |
| 1. | एकः गद्यांशः (80-100 शब्दपरिमितः) | अति-लघूत्तरात्मकौ<br>पूर्णवाक्यात्मकौ<br>शीर्षकम् (लघूत्तरात्मकः)<br>भाषिककार्यम् (बहुविकल्पात्मकाः) | 1×2=2<br>2×2=4<br>1×1=1<br>1×3=3 |
| | | **पूर्णभारः** | **10 अङ्काः** |

| | | | |
|---|---|---|---|
| **'ख' भागः**<br>**रचनात्मककार्यम् 15 अङ्काः** | | | |
| 2. | औपचारिकम् अथवा अनौपचारिकं पत्रम्<br>(मञ्जूषायाः सहायतया रिक्तस्थानपूर्तिमाध्यमेन पूर्णं पत्रं लेखनीयम्) | निबन्धात्मकः | ½×10=5 |
| 3. | चित्रवर्णनम् अथवा अनुच्छेदलेखनम् | पूर्णवाक्यात्मकः | 1×5=5 |
| 4. | कथापूर्तिः / संवादपूर्तिः<br>(मञ्जूषायाः सहायतया रिक्तस्थानपूर्तिमाध्यमेन पूर्णः कथा / संवादः लेखनीयः) | निबन्धात्मकः | ½×10=5 |
| | | **पूर्णभारः** | **15 अङ्काः** |
| **'ग' भागः**<br>**अनुप्रयुक्तव्याकरणम् 25 अङ्काः** | | | |
| 5. | सन्धिः | लघूत्तरात्मकाः | 1×4=4 |
| 6. | समासः | बहुविकल्पात्मकाः | 1×4=4 |
| 7. | प्रत्ययाः | बहुविकल्पात्मकाः | 1×4=4 |
| 8. | वाच्यपरिवर्तनम् | लघूत्तरात्मकाः | 1×3=3 |
| 9. | समयः | लघूत्तरात्मकाः | 1×3=3 |
| 10. | अव्ययानि | लघूत्तरात्मकाः | 1×4=4 |
| 11. | अशुद्धि-संशोधनम् | बहुविकल्पात्मकाः | 1×3=3 |
| | | **पूर्णभारः** | **25 अङ्काः** |
| **'घ' भागः**<br>**पठितावबोधनम् 30 अङ्काः** | | | |
| 12. | गद्यांशः | अति-लघूत्तरात्मकौ<br>पूर्णवाक्यात्मकः<br>लघूत्तरात्मकौ (भाषिककार्यम्) | ½×2=1<br>1×2=2<br>1×2=2 |
| 13. | पद्यम् (श्लोकः / श्लोकौ) | अति-लघूत्तरात्मकौ<br>पूर्णवाक्यात्मकः<br>लघूत्तरात्मकौ (भाषिककार्यम्) | ½×2=1<br>1×2=2<br>1×2=2 |
| 14. | नाट्यांशः | अति-लघूत्तरात्मकौ<br>पूर्णवाक्यात्मकः<br>लघूत्तरात्मकौ (भाषिककार्यम्) | ½×2=1<br>1×2=2<br>1×2=2 |
| 15. | प्रश्ननिर्माणम् | पूर्णवाक्यात्मकाः | 1×5=5 |

| 16. | अन्वयः अथवा भावार्थः (रिक्तस्थानपूर्तिमाध्यमेन) | निबन्धात्मकः | ½×4=2 |
|---|---|---|---|
| 17. | प्रसङ्गानुसारम् अर्थचयनम् | बहुविकल्पात्मकाः | 1×4=4 |
| 18. | पाठाधारित-कथापूर्तिः<br>(मञ्जूषापदसहायतया रिक्तस्थानपूर्तिः) | निबन्धात्मकः | ½×8=4 |
| | | **पूर्णभारः** | **30 अङ्काः** |
| | | **सम्पूर्णभारः** | **80 अङ्काः** |

## प्रश्नपत्र-प्रारूपम् /संरचना

### कक्षा – दशमी (2024-25)

### संस्कृतम् (सम्प्रेषणात्मकम्) कोड् सङ्ख्या - 119

| प्रश्नप्रकारः | प्रश्नानां सङ्ख्या | विभाग-सङ्ख्या | प्रतिप्रश्नम् अङ्कभारः | आहत्याङ्काः |
|---|---|---|---|---|
| **बहुविकल्पात्मकाः 1 अङ्कः** | 3+4+4+3+4=18 | 5 | 1 | 18 |
| **अति-लघूत्तरात्मकाः ½ अङ्कः** | 2+2+2=6 | 3 | ½ | 3 |
| **अति-लघूत्तरात्मकाः 1 अङ्कः** | 2=2 | 1 | 1 | 2 |
| **निबन्धात्मकः ½ अङ्कः**<br>(रिक्तस्थानपूर्तिमाध्यमेन) | 10+10+4+8 =32 | 4 | ½ | 16 |
| **दीर्घोत्तरात्मकाः 1 अङ्कः** | 5+2+2+2+5=16 | 5 | 1 | 16 |
| **दीर्घोत्तरात्मकाः 2 अङ्कौ** | 2=2 | 1 | 2 | 4 |
| **लघूत्तरात्मकाः 1 अङ्कः** | 1+4+3+3+4+2+2+2=21 | 8 | 1 | 21 |
| | | | **आहत्याङ्काः** | 80 |

# संस्कृतपाठ्यक्रमः (सम्प्रेषणात्मकम्) कोड् सङ्ख्या - 119

## कक्षा-दशमी (2024-25)

## वार्षिकं मूल्याङ्कनम्

<table>
<tr><td colspan="2">'क' भागः<br>अपठितावबोधनम् (10 अङ्काः)</td></tr>
<tr><td>1. एकः अपठितः गद्यांशः<br>80-100 शब्दपरिमितः गद्यांशः, सरलकथा<br>➢ एकपदेन पूर्णवाक्येन च अवबोधनात्मकं कार्यम् (2+4)<br>➢ शीर्षकलेखनम् (1)<br>➢ गद्यांशाधारितं भाषिकं कार्यम् (3)<br>भाषिककार्याय तत्त्वानि -<br>✓ वाक्ये कर्तृ-क्रियापदचयनम्<br>✓ विशेषण-विशेष्यचयनम्<br>✓ पर्याय-विलोमपद-चयनम्</td><td>10</td></tr>
<tr><td colspan="2">'ख' भागः<br>रचनात्मककार्यम् (15 अङ्काः)</td></tr>
<tr><td>2. सङ्केताधारितम् औपचारिकम् अथवा अनौपचारिकं पत्रलेखनम्<br>(मञ्जूषायाः सहायतया रिक्तस्थानपूर्तिमाध्यमेन पूर्णं पत्रं लेखनीयम्)<br>3. चित्राधारितं वर्णनम् अथवा अनुच्छेदलेखनम्<br>(मञ्जूषायाः सहायतया चित्रवर्णनम् अनुच्छेदलेखनं वा करणीयम्)<br>4. संवादपूर्तिः / कथापूर्तिः (कथा छात्रस्तरानुगुणम् एव भवेत्।)<br>(मञ्जूषायाः सहायतया रिक्तस्थानपूर्तिमाध्यमेन पूर्णः संवादः / कथा लेखनीया।)</td><td>5<br><br>5<br><br>5</td></tr>
<tr><td colspan="2">'ग' भागः<br>अनुप्रयुक्तव्याकरणम् (25 अङ्काः)</td></tr>
<tr><td>5. सन्धिकार्यम्<br>स्वरसन्धिः - वृद्धिः, यण्, अयादिः, पूर्वरूपम् (1 अङ्कः)<br>व्यञ्जनसन्धिः - परसवर्णः (अनुस्वारस्थाने पञ्चमवर्णस्य प्रयोगः), तुगागमः, वर्गीयप्रथमवर्णस्य तृतीयवर्णे परिवर्तनम्। (1 अङ्कः)<br>विसर्गसन्धिः - उत्वम्, रत्वम्, विसर्गलोपः, विसर्गस्य स्थाने स्,श्,ष् (2 अङ्कौ)<br>6. समासः - (वाक्येषु समस्तपदानां विग्रहः विग्रहपदानां च समासः)<br>➢ तत्पुरुषः – विभक्तिः, नञ्, उपपदः (2 अङ्कौ)</td><td>4<br><br><br><br><br>4</td></tr>
</table>

| | |
|---|---|
| ➢ द्वन्द्वः (1 अङ्कः)<br>➢ अव्ययीभावः (अनु, उप, सह, निर्, प्रति, यथा) (1 अङ्कः) | |
| 7. प्रत्ययाः<br>➢ तद्धिताः – मतुप्, ठक्, त्व, तल् (3 अङ्काः)<br>➢ स्त्रीप्रत्ययौ – टाप्, ङीप् (1 अङ्कः) | 4 |
| 8. वाच्यपरिवर्तनम् - केवलं लट्लकारे (कर्तृ-कर्म-क्रिया) | 3 |
| 9. समयः - अङ्कानां स्थाने शब्देषु समयलेखनम्<br>(सामान्य-सपाद-सार्ध-पादोन) | 3 |
| 10. अव्ययानि<br>इव, उच्चैः, एव, नूनम्, इतस्ततः, विना, सहसा, वृथा, शनैः, इति, मा, यत्, सम्प्रति, इदानीम्, अधुना, यावत्, बहिः, कदापि, च, अपि, पुरा, अत्र-तत्र, यथा-तथा, कदा,अद्य, श्वः, परश्वः,ह्यः, परह्यः, किमर्थम्, कुत्र, यदि-तर्हि | 4 |
| 11. अशुद्धि-संशोधनम् (वचन-लिङ्ग-पुरुष-लकार-दृष्ट्या संशोधनम्) | 3 |
| **'घ' भागः**<br>**पठितावबोधनम् (30 अङ्काः)** | |
| 12. गद्यांशम् अधिकृत्य अवबोधनात्मकं कार्यम्<br>प्रश्नप्रकाराः – एकपदेन पूर्णवाक्येन च प्रश्नोत्तराणि<br>भाषिककार्यम् –<br>➢ वाक्ये कर्तृ-क्रिया-पदचयनम्<br>➢ विशेषण-विशेष्य-चयनम्<br>➢ पर्याय-विलोमपद-चयनम् | 5 |
| 13. पद्यम् (श्लोकम्/श्लोकौ) अधिकृत्य अवबोधनात्मकं कार्यम्<br>प्रश्नप्रकाराः – एकपदेन पूर्णवाक्येन च प्रश्नोत्तराणि<br>भाषिककार्यम् –<br>➢ वाक्ये कर्तृ-क्रिया-पदचयनम्<br>➢ विशेषण-विशेष्य-चयनम्<br>➢ पर्याय-विलोमपद-चयनम् | 5 |
| 14. नाट्यांशम् अधिकृत्य अवबोधनात्मकं कार्यम्<br>प्रश्नप्रकाराः – एकपदेन पूर्णवाक्येन च प्रश्नोत्तराणि<br>भाषिककार्यम् –<br>➢ वाक्ये कर्तृ-क्रिया-पदचयनम्<br>➢ विशेषण-विशेष्य-चयनम्<br>➢ पर्याय-विलोमपद-चयनम् | 5 |

| | |
|---|---|
| 15. वाक्येषु रेखाङ्कितपदानि अधिकृत्य प्रश्ननिर्माणम् | 5 |
| 16. एकस्य श्लोकस्य अन्वयः अथवा भावार्थः<br>(मञ्जूषायाः सहायतया रिक्तस्थानपूर्तिमाध्यमेन पूर्णः अन्वयः भावार्थः वा लेखनीयः) | 2 |
| 17. प्रसङ्गानुसारम् अर्थचयनम् (पाठान् आधृत्य बहुविकल्पात्मकाः प्रश्नाः) | 4 |
| 18. पाठाधारित-कथापूर्तिः (मञ्जूषापदसहायतया रिक्तस्थानपूर्तिः) | 4 |

**आहत्याङ्काः - 80**

## परीक्षायै निर्धारिताः पाठाः

| पाठसङ्ख्या | पाठनाम | पाठसङ्ख्या | पाठनाम |
|---|---|---|---|
| प्रथमः पाठः | वाङ्मयं तपः | सप्तमः पाठः | साधुवृत्तिं समाचरेत् |
| द्वितीयः पाठः | नास्ति त्यागसमं सुखम् | अष्टमः पाठः | तिरुक्कुरल्-सूक्ति-सौरभम् |
| तृतीयः पाठः | रमणीया हि सृष्टिः एषा | नवमः पाठः | सुस्वागतं भो! अरुणाचलेऽस्मिन् |
| चतुर्थः पाठः | आज्ञा गुरूणां हि अविचारणीया | दशमः पाठः | कालोऽहम्<br>(केवलम् आन्तरिकमूल्याङ्कनाय) |
| पञ्चमः पाठः | अभ्यासवशगं मनः | | |
| षष्ठः पाठः | राष्ट्रं संरक्ष्यमेव हि | एकादशः पाठः | किं किम् उपादेयम्<br>(केवलम् आन्तरिकमूल्याङ्कनाय) |

**अवधेयम् -**

*** परीक्षायै अनुप्रयुक्तव्याकरणस्य अंशानां चयनं यथासम्भवं 'मणिका-द्वितीयो भागः इति' पाठ्यपुस्तकात् करणीयम्। यदि ततः न सम्भवति तर्हि 'मणिका-अभ्यासपुस्तकम् द्वितीयो भागः' इत्यस्मात् कर्तुं शक्यम्।**

**निर्धारित – पाठ्यपुस्तके-**

1. **'मणिका'- द्वितीयो भागः,** पाठ्यपुस्तकम् (प्रकाशनम् - केन्द्रीय माध्यमिक शिक्षा बोर्ड)
2. **'मणिका-अभ्यासपुस्तकम्' - द्वितीयो भागः** (प्रकाशनम् - केन्द्रीय माध्यमिक शिक्षा बोर्ड)

# आन्तरिक-मूल्याङ्कनम्

(20 अङ्काः)

**उद्देश्यानि**

- छात्राणां सृजनात्मकक्षमतायाः विकासः।
- श्रवण-भाषण-पठन-लेखनकौशलानां विकासः।
- चिन्तनक्षमतायाः आत्मविश्वासस्य च संवर्धनम्।

| क्र. सं. | गतिविधयः | उदाहरणानि | अङ्काः | निर्देशाः | मूल्याङ्कनबिन्दवः |
|---|---|---|---|---|---|
| 1. | **आवधिक-परीक्षाः (पीरियोडिक् - असैस्मैंट)** | लिखितपरीक्षा | 05 | विद्यालयेन समये समये लिखितपरीक्षाणाम् आयोजनं करणीयं भवति। | परीक्षासु यत्र विद्यार्थिनः श्रेष्ठाः अङ्काः स्युः तयोः द्वयोः परीक्षयोः एव अधिभारः ग्रहीतव्यः। अपि च आवधिकपरीक्षासु अपि प्रश्नेषु आन्तरिकविकल्पाः देयाः। मूल्याङ्कनसमये यदि छात्रः सर्वान् प्रश्नान् उत्तरति तर्हि छात्रहिताय यत्र अधिकाः अङ्काः सन्ति तेषाम् एव मूल्याङ्कनं करणीयम्। |
| 2 | **बहुविधमूल्याङ्कनम्** | ❖ कक्षायां पाठितस्य पाठस्य लघुमूल्याङ्कनम्<br>❖ निर्गतपत्राणि<br>❖ प्रश्नोत्तरी<br>❖ मौखिकी परीक्षा<br>❖ प्रतियोगिताः<br>❖ प्रश्नमञ्चस्यायोजनम् | 05 | कक्षायां पाठित-पाठस्य विषयस्य वा बहुविधं मूल्याङ्कनम् अपेक्षितम् अस्ति। अनेन विद्यार्थिनां विविधकौशलानां मूल्याङ्कनं भवेत्। | ❖मौलिकता<br>❖विषयसम्बद्धता<br>❖शुद्धता<br>❖समयबद्धता<br>❖प्रस्तुतीकरणम् |
| 3. | **निवेशसूचिका (पोर्टफोलियो)** | ❖ कक्षाकार्यम्<br>❖ सामूहिक-मूल्याङ्कनम्<br>❖ स्वमूल्याङ्कनम्<br>❖ विद्यार्थिनः विषयगताः उपलब्धयः | 05 | विद्यार्थिभिः कक्षायां कृतानां कार्याणाम् उपलब्धीनां च संरक्षणं संयोजनं च सञ्चिकायां पत्रावल्यां वा करणीयम्। एतेन समग्रं मूल्याङ्कनं प्रामाणिकत्वेन भवितुं शक्नोति। | ❖ सुलेखः<br>❖ तथ्यात्मकता<br>❖ प्रामाणिकता<br>❖ समयबद्धता |

| 4. | भाषा-संवर्धनाय गतिविधयः<br>(क) श्रवण-भाषण-कौशलम् | ❖ कथा<br>❖ संवादः / वार्तालापः<br>❖ भाषणम्<br>❖ नाटकम्<br>❖ वार्ताः<br>❖ आशुभाषणम्<br>❖ संस्कृतगीतगायनम्<br>❖ श्लोकोच्चारणम्<br>❖ प्रहेलिकाः | 05 | ❖ छात्राः कामपि कथां श्रावयितुं शक्नुवन्ति।<br>❖ शिक्षकः कमपि विषयं सूचयित्वा परस्परं संवादं कारयितुं शक्नोति।<br>❖ दूरदर्शने वार्तावली इत्याख्यः संस्कृत-कार्यक्रमः प्रसारितः भवति तं द्रष्टुं छात्राः प्रेरणीयाः।<br>❖ श्रवण-कौशल-मूल्याङ्कनाय शिक्षकः स्वयम् अपि कथां श्रावयित्वा ततः सम्बद्ध-प्रश्नान् प्रष्टुं शक्नोति। | ❖ उच्चारणम्<br>❖ शुद्धता<br>❖ समयबद्धता<br>❖ प्रस्तुतीकरणम्<br>❖ स्मरणम्<br>(आरोहावरोह-गतियति-प्रयोगः) |
|---|---|---|---|---|---|
| | (ख) लेखनकौशलम् | ❖ विविधविषयान् आधृत्य मौलिकलेखनम् यथा– देशः, माता, पिता, गुरुः, विद्या पर्यावरणम्, योगः, समयस्य सदुपयोगः, शिक्षा, अनुशासनम् इत्यादयः।<br>❖ शैक्षिकभ्रमणस्य संस्कृतेन प्रतिवेदनलेखनम्।<br>❖ दैनन्दिनीलेखनम्।<br>❖ सङ्केताधारितं कथालेखनम्।<br>❖ भित्तिपत्रिकायाः निर्माणम्।<br>❖ श्रुतलेखः।<br>❖ सूक्तिलेखनम्। | | ❖ छात्राः यथाशक्यं कक्षायामेव लेखनकार्यं कुर्युः।<br>❖ टिप्पणी- पुस्तिकायाः निर्माणम्।<br>❖ वैयक्तिकपरीक्षणम्। | ❖ विषय-सम्बद्धता<br>❖ शुद्धता (विशेषतः पञ्चमवर्णस्यप्रयोगः)<br>❖ समयबद्धता<br>❖ सुलेखः<br>❖ प्रस्तुतीकरणम् |
| | **अवधातव्यम्** –उपर्युक्त-गतिविधयः उदाहरणरूपेण प्रदत्ताः सन्ति। एतदतिरिच्य एतादृशाः अन्यगतिविधयः अपि भवितुमर्हन्ति। | | | | |

****************************************

# अपठित - अवबोधनम्

1. **अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

सूर्यवंशे सर्वप्रथमं मनुर्नामनृपः अभवत्। तस्य कुले एव दिलीपः इति ख्यात नामाराजा समुत्पन्नः। राजा दिलीपः सर्वेषां विषयाणां ज्ञाता आसीत् तथापि सः सर्वदा अभिमान रहितः, पराक्रमी, परिश्रमी, क्षमाशीलः आसीत्। दिलीप: न्यायपूर्वकं पितृवत् च प्रजा पालनं करोति स्म। सः प्रजायाः रक्षणे सर्वदा उद्यतः भवति स्म। अतः सः एव प्रजायाःपिता आसीत्। राजा दिलीप: यदा चिरं सन्ततिं न अलभत तदा तं गुरु वशिष्ठः सन्ततिं प्राप्तुं कामधेनोः पुत्र्याः नन्दिन्याः सेवार्थम् आदिशत्। दिलीपः स्वभार्यया सह एकविंशतिः दिवस पर्यन्तं गो सेवाम् अकरोत्। द्वाविंशतितमे दिने एकः सिंहः नन्दिनीम् आक्राम्यत्। दिलीप: गो रक्षायै स्व शरीरं समर्पयितुम् उद्यतः अभवत्। प्रसन्ना नन्दिनी तस्मै सन्ततेः वरम् अयच्छत्।

**(क) एक पदेन उत्तरत (केवलं प्रश्न द्वयम्)**

i. दिलीप: कया सह गो सेवाम् अकरोत् ?
ii. दिलीपः किमर्थं स्वशरीरं समर्पयितुम् उद्यतः अभवत् ?
iii. सूर्यवंशे सर्वप्रथमं कः नृपः अभवत् ?

**(ख) पूर्ण वाक्येन उत्तरत (केवलं प्रश्न द्वयम्)**

i. गुरुवशिष्ठः किमर्थं नन्दिन्याः सेवार्थम् आदिशत् ?
ii. दिलीपः कथं प्रजापालनं करोति स्म ?
iii. दिलीप: कति दिवसपर्यन्तं गो सेवाम् अकरोत् ?

**(ग) अनुच्छेदस्य कृते उपयुक्तं शीर्षकं संस्कृतेन लिखत |**

**(घ) यथानिर्देशम् उत्तरत - (केवलं प्रश्न त्रयम्)**

i. 'आक्राम्यत्' इत्यस्याः क्रियायाः कर्तृपदं किम् ?
(क) दिलीप: (ख) वशिष्ठः (ग) सिंह:

ii. 'क्षमाशीलः' इतिपदस्य विशेष्यं गद्यांशात् चित्वा लिखत।
(क) पराक्रमी (ख) दिलीप: (ग) वशिष्ठः

iii. वंशे' इत्यस्य पदस्य कःपर्यायः अत्र आगतः ?
(क) कुले (ख) सन्ततेः (ग) चिरम्

iv अनुच्छेदे 'अलसः' पदस्य कः विपर्ययः आगतः ?
(क) क्षमाशीलः (ख) परिश्रमी (ग) पराक्रमी

**उत्तराणि -**

**(क) एक पदेन उत्तरत -** (i) भार्यया (ii) गोरक्षायै (iii) मनुः । मनुर्नाम

**(ख) पूर्णवाक्येन उत्तरत -**

i. गुरुः वशिष्ठः सन्ततिं प्राप्तुं राजानं दिलीपं नन्दिन्याः सेवार्थम् आदिशत्।
ii. दिलीप: न्यायपूर्वकं पितृवत् च प्रजापालनं करोति स्म।
iii. दिलीपः एकविंशति-दिवसपर्यन्तं गो सेवाम् अकरोत्।

**(ग) उचितं शीर्षकं लिखत-**दिलीपः / राजा दिलीपः / अथवा अन्यः कोऽपि समुचितः |

**(घ) यथा निर्देशं उत्तरत-**

i. सिंहः
ii. दिलीपः
iii. कुले
iv. परिश्रमी:

**2. अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

संसारे सज्जनाः दुर्जनाः च अपि वर्तन्ते। सज्जनानां सङ्गतिः दुर्जनानां सङ्गतिश्च कुसङ्गतिः भवति। सामाजिकः प्राणी सङ्गतिं विना स्थातुं न शक्नोति। अतः मनुष्याय सङ्गतिः अनिवार्या एव। सत्सङ्गत्या मनुष्यः सदैव उन्नतिं करोति कुसङ्गत्यातु सः पतन मार्गे नूनं पतति। गुणं विना कोऽपि मानवः सन्मानवः न भवति। सत्संगेन सज्जनः सन्मार्गम् अनुसरति, गुणानभिनन्दति। सत्सङ्गस्य प्रभावेन मनुष्येषु शनैः शनैः गुणाः प्रविशन्ति अवगुणाश्च बहिः निर्गच्छन्ति। सङ्गस्य प्रभावः सर्वत्र दृश्यते। उक्तञ्च-'कीटोऽपि सुमनः सङ्गात् आरोहति सतांशिरः'। सत्सङ्गत्या मनुष्यः समाजे मानं प्राप्नोति किन्तु कुसङ्गतौ पतित्वा तु मनुष्यः अपयशः निन्दाम् अपमानम् च प्राप्नोति । अतः सर्वदा सत्सङ्गतौ एव वस्तव्यम् समाजे च मानं प्राप्तव्यम् ।

**(क) एकपदेन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. केषां सङ्गतिः सत्सङ्गतिः भवति?
ii. सङ्गतिः कस्मै अनिवार्या एव अस्ति?
iii. कुत्र सज्जनाः दुर्जनाः च वर्तन्ते?

**(ख) पूर्ण वाक्येन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. सत्सङ्गेन मनुष्यः किं करोति ?
ii. कुसङ्गतौ पतित्वा मनुष्यः किं प्राप्नोति ?
iii. कः सङ्गतिं विना स्थातुं न शक्नोति ?

**(ग) गद्यांशस्य समुचितं शीर्षकं लिखत।**

**(घ) यथा निर्देशम् उत्तरत : - (केवलं प्रश्न त्रयम् )**

i. 'आरोहति' इति क्रियापदस्य कर्तृ पदं गद्यांशात् चित्वा लिखत ?

(क) सङ्गात् (ख) अनुसरति (ग) सुमनः (घ) कीटः

ii. सः पतनमार्गे नूनं पतति अत्र 'सः' इति सर्वनामपदं कस्मै प्रयुक्तम् ?

(क) कीटाय (ख) गुणाय (ग) मनुष्याय (घ) प्रभावाय

iii. 'कुमार्गम्' इत्यस्य विलोमपदं चित्वा लिखत ?

(क) सन्मार्गम् (ख) नूनम् (ग) वक्तव्यम् (घ) सत्सङ्गतिः

iv. 'प्राणी' इति पदस्य विशेषण प दंकिम् ?

(क) सामाजिकः (ख) मनुष्यः (ग) दुर्जनः (घ) कीटः

**उत्तराणि -**

**(क) एकपदेन उत्तरतः-**(i) सज्जनानाम् (ii) मनुष्याय (iii) संसारे

**(ख) पूर्णवाक्येन उत्तरतः-**

i. सत्सङ्गेन मनुष्यः सदैव उन्नतिं करोति। सत्सङ्गस्य प्रभावेण मनुष्येषु शनैः शनैः गुणाः प्रविशन्ति अवगुणाः च बहिः निर्गच्छन्ति।

ii. कुसंगतौ पतित्वा मनुष्यः अपयशः निन्दाम् अपमानम् एव प्राप्नोति।

iii. सामाजिकः प्राणी सङ्गतिं विना स्थातुं न शक्नोति।

**(ग) उचितं शीर्षकं लिखतः- सत्संगतिः / अन्यम् अपि संभाव्यते।**

**(घ) यथा निर्देशं उत्तरत-**

**i.** (क) सामाजिकः (ख) सन्मार्गम् (ग) मनुष्याय (घ) कीटः|

**j. अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

पुरा एकस्मिन् समये केचन चौराः एकस्य सन्तस्य कुटीरम् आगत्य तस्य गां चोरयित्वा नयन्ति स्म । सन्तः ईश्वरस्य स्तुत्यांरतः आसीत्। उन्मीलित नेत्रः सन्तः अपश्यत् यत् केचन जनाः तस्य गां नयन्ति । सन्तः शान्त भावेन अवदत् 'तिष्ठत भ्रातरः ' ! एतं गो वत्सम् अपि नयत अन्यथा मातृ वियोगेन एषः स्व प्राणान् त्यक्ष्यति ।' सन्तस्य हृदयस्य करुण भावनया चौराणाम् हृदयपरिवर्तनम् अभवत् । ते सन्तस्य चरणयोः अपतन् । चौराः भविष्ये चौर कर्म त्यक्त्वा उद्यमेन धनम् अर्जयितुम् प्रेरिताः अभवन् । वास्तविकरूपेण सन्तानां स्वभावः परेषां कृते प्रेरकः भवति । अतः ते प्रत्यक्षा प्रत्यक्ष रूपेण समाजस्य आदर्शभूताः भवन्ति ।

**(क) एकपदेन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. के गां चौरयित्वा नयन्ति स्म ?

ii. चौराः कस्य गां चोरयित्वा नयन्ति स्म ?

iii. ते सन्तस्य कयोः अपतन् ?

**(ख) पूर्णवाक्येन उत्तरत- (केवलं प्रश्न द्वयम्)**

i. उन्मीलितनेत्रः सन्तः किम् अपश्यत् ?

ii. सन्तः शान्त भावेन किम् अवदत् ?

iii. चौराः भविष्ये चौर कर्म त्यक्त्वा उद्यमेन किं अर्जयितुं प्रेरिताः अभवन्?

iv. गद्यांशस्य कृते उपयुक्तं शीर्षकं लिखत ।

**(ग) भाषिक कार्यम् -(केवलं प्रश्न त्रयम् )**

i. 'धेनुः' इत्यर्थे गद्यांशे किं पदं प्रयुक्तम् ?

ii. " मातृ वियोगेन एषः स्वप्राणान् त्यक्ष्यति ।' अस्मिन् वाक्ये 'एषः' इति सर्वनाम पदं कस्मै प्रयुक्तम् ?

iii. 'नयन्ति स्म' इति क्रियापदस्य कृते कर्तृ पदं किम्?

iv. "उन्मीलित नेत्रः सन्तः' अनयोः पदयोः विशेषणपदं किम्?

**उत्तराणि -**

**(क) एकपदेन उत्तरत:-** (i) चौराः (ii) सन्तस्य (iii) चरणयोः

**(ख) पूर्णवाक्येन उत्तरत:-**

i. उन्मीलित नेत्रः सन्तः अपश्यत् यत् केचन जनाः तस्य गां नयन्ति ।

ii. सन्तः शान्त भावेन अवदत् - तिष्ठत भ्रातरः ! एतं गो वत्सम् अपि नयत अन्यथा मातृवियोगेन एषः स्वप्राणान् त्यक्ष्यति ।

iii. चौराः भविष्ये चौर कर्म त्यक्त्वा उद्यमेन धनम् अर्जयितुम् प्रेरिताः अभवन्।

**(ग) उचितं शीर्षकं लिखत:-** हृदय परिवर्तनम् / उद्यमस्य महत्वम् / अन्यम् अपि संभाव्यते।

**(घ) यथा निर्देशं उत्तरत-**

i. गौः ii. गोवत्साय iii. चौराः iv. उन्मीलितनेत्रः

**3. अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

जगति परोपकार एव धर्मः। परोपकार-प्रवृत्तो हि धर्मात्मा पुण्यात्मा च अस्ति। उत्तमाः पुरुषाः तु स्वार्थम् उपेक्ष्य अपि परहित साधन तत्पराः भवन्ति। स्वोदरभरणरताः तु काक कुक्करा एव भवन्ति। वयं पश्यामः हि यत् प्रकृतिः अपि परहित साधन परावर्तते। वृक्षाः परोपकाराय एव सुस्वादूनि फलानि फलन्ति। नद्यः परोपकाराय एव शीतलं जलं वहन्ति। गावः तु परोपकाराय एव प्रकृत्या मधुरं पयः दुहन्ति। सर्वत्र एव प्रकत्या परोपकारार्थम् स्वशरीरमर्पितं क्रियते। अत्रैव शरीरस्य साफल्यम् अस्ति। परोपकाराय एव पादपः तीव्रतमं सूर्य तापं स्वमूर्ध्नि सहमानः स्वाश्रितेभ्यः पथिकेभ्यः छायां विस्तार्य सुखं वितरति। यथा दिनकरः पद्याकरं विकासयति, निशाकरः कैरव कुलं विकासयति, मेघः जलं यच्छति। परोपकार एव शरीरस्य सत्यं भूषणमस्ति।

**(क) एकपदेन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. जगति कः धर्मः?

ii. परोपकारः शरीरस्य कीदृशं भूषणम् अस्ति ?

iii. वृक्षाः कस्मै एव सुस्वादूनि फलानि फलन्ति ?

**(ख) पूर्णवाक्येन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. स्वोदर भरणरताः मनुष्याः कीदृशाः भवन्ति ?

ii. प्रकृतिः परोपकारार्थं किं करोति ?

iii. प्रकृतिः अपि कीदृशी वर्तते ?

**(ग) अनुच्छेदम् आधृत्य समुचितं शीर्षकं लिखत ।**

**(घ) यथानिर्देशम् उत्तरत : - (केवलं प्रश्न त्रयम् )**

i. 'वहन्ति' पदस्य कर्तृ पदं किम् अस्ति ?

(क) परोपकारः (ख) धर्मः (ग) दिनकरः (घ) नद्यः

ii. 'शीतलंजलं' अनयोः पदयोः किं विशेष्य पदम् अस्ति ?

(क) शीतलं (ख) जलम् (ग) शीतलजलम् (घ) नद्यः

iii. 'दुष्टात्मा' पदस्य विलोमपदं लिखत।

(क) सूर्यतापं (ख) पुण्यात्मा (ग) उत्तमाः (घ) पद्माकरं

iv. 'तरवः' पदस्य समानार्थकपदम् गद्यांशात् चित्वा लिखत।

(क) वृक्षाः (ख) नद्यः (ग) पुरुषाः (घ) गावः

**उत्तराणि -**

**(क) एकपदेन उत्तरत:-** i.परोपकारः ii. सत्यं iii. परोपकाय

**(ख) पूर्णवाक्येन उत्तरत:-**

i. स्वोदर भरणरताः मनुष्याः काककुक्कुराः एव भवन्ति।

ii. प्रकृतिः परोपकारार्थम् स्वशरीरम् अर्पितम् करोति।

iii. प्रकृतिः अपि परहित साधन परावर्तते।

**(ग) उचितं शीर्षकं लिखत-** 'परोपकारः सर्वोत्तमः धर्म:'/ अन्यम् अपि संभाव्यते।

**(घ) यथानिर्देशं उत्तरत:-**

i. नद्यः ii. जलम् iii. पुण्यात्मा iv. वृक्षाः

**4. अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

आधुनिके युगे प्रदूषणस्य महती समस्या अस्ति । कुत्रापि स्वच्छः वायुः, स्वच्छं जलं, स्वच्छा निखाद्य पदार्थानि न प्राप्यन्ते। यन्त्रालयानां यानानां च धूम्रेण सम्पूर्णं वायुमण्डलम् दूषितं सञ्जातम् । दूषित वायुना विविधाः श्वासरोगाः जनान् पीडयन्ति । वृक्षाणां विनाशं कृत्वा जनाः औद्योगिक क्षेत्राणां विकासं तु कुर्वन्ति किन्तु ते प्रकृति देवीमपि संपीडयन्ति । अस्मात्बहुविध - प्रदूषणात् एव कुत्रचित् अतिवृष्टिः कुत्रचित् च अनावृष्टिः भवति । अनेन धनस्य जनस्य च क्षतिः भवति । अतः अस्माभिः सर्वैः सह मिलित्वा प्रदूषण - समस्यायाः समाधानम् कर्तव्यम् ।

**(क) एकपदेन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. आधुनिके युगे कस्य महती समस्या अस्ति ?

ii. केन श्वासरोगाः भवन्ति ?

iii. अस्माभिः कैः सह मिलित्वा प्रदूषण समस्यायाः समाधानं कर्तव्यम् ?

**(ख) पूर्णवाक्येन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. सम्पूर्णं वायुमण्डलं केन दूषितं सञ्जातम् ?

ii. जनाः प्रकृतिदेवी कथं सं पीडयन्ति?

iii. कस्मात् कारणात् अतिवृष्टिः भवति ?

**(ग) गद्यांशस्य कृते उपयुक्तं शीर्षकं लिखत ।**

**(घ) निर्देशानुसारम् उत्तरत -**

i. 'हानिः' इत्यर्थे गद्यांशे किं पदम् लिखितम् ?

(क) विनाशं (ख) क्षतिः (ग) वृष्टिः

ii. 'समस्या' इति विशेष्यपदस्य कृते किम् विशेषणपदम् प्रयुक्तम् ?

(क) महती (ख) प्रदूषणस्य (ग) अस्ति

iii. 'कुर्वन्ति' इति क्रिया पदस्य कृते कर्तृ पदं किम्?

(क) विनाशं (ख) वृक्षाणां (ग) जनाः

**उत्तराणि -**

**(क) एकपदेन उत्तरत:-** (i) प्रदूषणस्य (ii) दूषित वायुना (iii) सर्वैः

**(ख) पूर्णवाक्येन उत्तरत:-**

i. यन्त्रालयानां यानानां च धूम्रेण सम्पूर्णं वायुमण्डलम् दूषितं सञ्जातम्।

ii. जनाः वृक्षाणां विनाशं कृत्वा प्रकृतिदेवीमपि सं पीडयन्ति।

iii. बहुविध - प्रदूषणात्वृक्षाणां विनाशात् च कुत्रचित् अतिवृष्टिः कुत्रचित् च अनावृष्टिः भवति।

**(ग) उचितं शीर्षकं लिखत -**प्रदूषणम् / संसारस्य महतीसमस्या / अन्यम् अपि संभाव्यते।

**(घ)** यथानिर्देशं उत्तरत-

i.क्षतिः ii.महती iii. जनाः

**5. अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

एकदा एकः संन्यासी नृपस्य भवनम् अगच्छत्। नृपः तस्य हार्दिकं स्वागतम् अकरोत् समुचित - भोजन प्रदानादिभिश्च अतिथि सत्कारम् अकारयत्। संन्यासिना सह वार्तालाप प्रसङ्गे राजातम् अपृच्छत् -' हे महात्मन् ! मम कृते सर्वाधिकं करणीयं किं कार्यम् अस्ति येन अहं पुण्यं प्राप्तुं शक्नुयाम्? ' स्पष्टवक्ता संन्यासी अवदत्- 'हे राजन् ! यदि भवान् पुण्यं प्राप्तु मिच्छति तर्हि अधिकाधिकं शयनं करोतु। ' नृपः विस्मयेन अपृच्छत् - ' भवता एतत् कीदृशं करणीयम् उपदिश्यते ? अधिकाधिक शयनेन अधिकाधिकं पुण्यं प्राप्यते किम् ? अहम् एतद् अवगन्तुं सर्वथा असमर्थोऽस्मि।' संन्यासी विहस्य अवदत्-'यावदधिकं भवान् स्वप्स्यति, तावदधिकमेव प्रजाः तव अत्याचारेभ्यः मुक्ताः भविष्यन्ति। भवतः पापानामपि क्षयः भविष्यति।' एतदुक्त्वा संन्यासी बहिरगच्छत्, परं नृपस्तु प्रजानाम्पीडाम् अनुभवन् आत्मानं समीक्षमाणः पश्चात्तापं कर्तुमारभत। अहो ! महात्मनाम् प्रभाव: ! "

**(क) एकपदेन उत्तरत - ( केवलं प्रश्न द्वयम् )**

i. कः नृपस्य भवनम् आगच्छत्?

ii. संन्यासिनः मतेन राजा कथम् अधिकाधिकं पुण्यं प्राप्तुं शक्नोति ?

iii. नृपस्य अधिकाधिक शयनेन प्रजाः केभ्यः मुक्ताः भविष्यन्ति ?

**(ख) पूर्णवाक्येन उत्तरत - ( केवलं प्रश्न द्वयम् )**

i. वार्तालाप प्रसङ्गे राजा सन्यासिनं किम् अपृच्छत् ?

ii. संयासिनः बहिर्गमनान्तरं नृपस्य कीदृशी अवस्था अभवत् ?

iii. कः विस्मयेन अपृच्छत् ?

**(ग) अनुच्छेदस्य समुचितं शीर्षकं लिखत।**

**(घ) यथानिर्देशम् उत्तरत : - (केवलं प्रश्न त्रयम् )**

i. हानिः अस्य पदस्य समानार्थकं पदम् अनुच्छेदात् चित्वा लिखत।

(क) प्रभावः (ख) पुण्यम् (ग) क्षयः (घ) कृते

ii. अस्मिन् अनुच्छेदे रुदित्वा इति पदस्य किं विलोम पदं प्रयुक्तम्?

(क) एतदुक्त्वा (ख) अनुभवन् (ग) शक्नुयाम् (घ) विहस्य

iii. ' तस्य हार्दिकं स्वागतम् अकरोत् " -अस्मिन् वाक्ये किं विशेषण पदम्?

(क) तस्य (ख) अकरोत् (ग) हार्दिकं (घ) स्वागतम्

iv. "भवता एतत् कीदृशं करणीयम् उपदिश्यते?" अस्मिन् वाक्ये 'भवता' इति सर्वनामपदं कस्मै प्रयुक्तम्?

(क) संयासिने (ख) राज्ञे (ग) प्रजायै (घ) अत्याचाराय

**उत्तराणि -**

**(क) एकपदेन उत्तरत:-** i.सन्यासी ii.अधिकाधिकशयनं iii.अत्याचारेभ्यः

**(ख) पूर्णवाक्येन उत्तरत:-**

i. वार्तालाप प्रसङ्गे राजा सन्यासिनम् अपृच्छत्, " हे महात्मन् ! मम कृते सर्वाधिकं करणीयं किं कार्यम् अस्ति येन अहम् पुण्यं प्राप्तुम् शक्नुयाम् । "

ii. सन्यासिनः बहिर्गमनान्तरं नृपः प्रजानाम् पीडाम् अनुभवन् आत्मानं समीक्षमाणः पश्चात्तापं कर्तुमारभत।

iii. नृपः विस्मयेन अपृच्छत् |

**(ग) उचितं शीर्षकं लिखत-** 'महात्मनाम् प्रभावः'/ अन्यम् अपि संभाव्यते।

**(घ) यथानिर्देशं उत्तरत:-**

i. क्षयः ii. विहस्य iii. हार्दिकं iv. संयासिने

**6. अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

पुरा सोमदेवः नाम कश्चन् पुरुषः बाल्ये वयसि विद्याध्ययनं न कृतवान्। सः सदा दुर्जनैः सह मिलित्वा कालं यापयति स्म । तस्मात् कारणात् स: समाजस्य अप्रयोजकः जनः जातः । अतः तं दृष्ट्वा सर्वेजनाः उपहासं कुर्वन्ति । तेन दुःखितः सोमदेवः "अहं कथमपि विद्यां साधयेयम्" इति मनसा निर्णयं करोति । अतः तपसा विद्यां साधयितुम् इच्छन् गङ्गा तीरं गत्वा तपः

आचरितवान् । तदा देवाधिपतिः इन्द्रः आगत्य अवदत् - तपसा विद्याध्ययनं कर्तुं न शक्यते । विद्याध्ययनार्थं गुरोः समीपं गन्तव्यम् । गुरोः उपदेशात् एव विद्या प्राप्तिः भवेत् । आदौ अक्षराभ्यासः ततः विद्याध्ययनं भवेत् । तदा मानवः विद्यावान् भवति "इति उपदिशति । ततः गुरोः समीपं गत्वा अध्ययनं कृत्वा विद्यावान् भविष्यति ।

**(क) एकपदेन उत्तरं लिखत - ( केवलं प्रश्न द्वयम् )**

i. देवाधिपतिः कः ?

ii. बाल्येवयसि सोमदेवः किं न कृतवान् ?

iii. कस्य उपदेशात् एव विद्या प्राप्तिः भवेत् ?

**(ख) पूर्णवाक्येन उत्तरं लिखत - ( केवलं प्रश्न द्वयम् )**

i. सोमदेवः मनसा किं निर्णयं करोति ?

ii. सोमदेवं दृष्ट्वा जनाः किं कुर्वन्ति स्म ?

iii. सोमदेवः कैः सह मिलित्वा कालं यापयति ?

**(ग) अनुच्छेदस्य कृते उचितं शीर्षकं लिखत ।**

**(घ) निर्देशानुसारम् उत्तरं लिखत | (केवलं प्रश्न त्रयम् )**

(क) 'करोति' इतिक्रिया पदस्य कर्तृपदं किम् ?

i.कथमपि ii.सोमदेवः iii.अहम् iv.विद्या.

(ख) ' अन्ते' इति पदस्य किं विलोमपदम् अनुच्छेदे अस्ति ?

i.दूरम् ii.आदौ iii.समीपम् iv.गन्तव्यम्

(ग) "तं दृष्ट्वा सर्वे उपहसन्ति " अत्र तम् इति सर्वनामपदं कस्मै प्रयुक्तम् ?

i.मानवाय ii.इन्द्राय iii.जनेभ्यः iv.सोमदेवाय

(घ) "बाल्ये वयसि" अत्र विशेषणपदं किम् ?

i.बाल्ये ii.कृतवान् iii.वयसि iv.कश्चन

**उत्तराणि -**

**(क) एकपदेन उत्तरतः-** i.इन्द्रः ii.विद्याध्ययनम् iii.गुरोः

**(ख) पूर्णवाक्येन उत्तरतः-**

i. सोमदेवः "अहं कथमपि विद्यां साधयेयम्" इति मनसा निर्णयं करोति |

ii. सोमदेवं दृष्ट्वा जनाः उपहासं कुर्वन्ति स्म |

iii. सोमदेवः सदा दुर्जनैः सह मिलित्वा कालं यापयति।

**(ग) उचितं शीर्षकं लिखतः-** विद्याप्राप्तिः / विद्याध्ययनम् / अन्यम् अपि संभाव्यते।

**(घ) यथा निर्देशं उत्तरत-**

i. सोमदेवः ii. आदौ iii. सोमदेवाय iv. बाल्ये

**7. अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

पुरा श्रीहर्षः भारतस्य चक्रवर्ती आसीत्। तस्मिन् काले 'ह्यूनत्साङ्गः' नाम चीनदेशीयः यात्री भारतम् आगतवान्। सः भारते अनेकेषु स्थलेषु अटितवान्। जनानां व्यवहारं भारतीय संस्कृतिं च

अवगतवान्। विविधान् धर्मग्रन्थान् विविधानि ऐतिहासिक वस्तूनि च संगृहीतवान्। सः स्वदेश गमनतः पूर्वं हर्ष चक्रवर्तिनम् अपश्यत्। तस्मै स्वानुभवं च निवेदितवान्। तस्मै कृतज्ञतां समर्पितवान्। हर्षः तस्मै अनेकान् उपहारान् दत्त्वा सम्मानितवान्। तस्य प्रयाणायनौ कांव्य व स्थापितवान्। रक्षणार्थं विंशतिः योधान् अपि प्रेषितवान्। हर्षः योधान् उद्दिश्य उक्तवान्- "भोः भटाः! एतस्यां नौकायां विविधाः भारतीय धर्मग्रंथाः सन्ति। अनेकानि ऐतिहासिक वस्तूनि च सन्ति। एतानि भारतीय संस्कृतेः प्रतीकानि अमूल्यानि च। अतः एतेषां ग्रंथानां वस्तूनां च रक्षणं भवतां कर्तव्यम्" इति। एकस्मिन् दिने समुद्रे अकस्मात् नौका दोलायमाना अभवत्। भीतः प्रधान नाविकः उक्तवान् "भोः। नौकायाः भारः अधिकः अस्ति। झटिति एतानि पुस्तकानि समुद्रे क्षिपन्तु। स्वप्राणान् च रक्षन्तु" इति। इदं वचनं श्रुत्वा सर्वे योधाः संस्कृतेः रक्षणार्थं झटिति एकैकशः तृणमिव स्वशरीरम् एव समुद्रे क्षिप्तवन्तः। एतत् दृश्यं दृष्ट्वा ह्यूनत्साङ्गः नेत्राभ्याम् अश्रूणि स्रावितवान्।

**(क). एकपदेन उत्तरत - ( केवलं प्रश्न द्वयम् )**

i. स्वदेश गमनतः पूर्वं ह्यूनत्साङ्ग कं दृष्टवान्?

ii. कः नेत्राभ्याम् अश्रूणि स्रावितवान्?

iii. कः भारतस्य चक्रवर्ती आसीत् ?

**(ख) पूर्णवाक्येन उत्तरत- ( केवलं प्रश्न द्वयम् )**

i. भीतः प्रधाननाविकः किम् उक्तवान् ?

ii. ह्यूनत्साङ्गः भारते अनेकेषु स्थलेषु अटित्वा किं किं ज्ञातवान् ?

iii. एतस्यां नौकायां विविधाः के सन्ति ?

**(ग). गद्यांशस्य उचितं शीर्षकं लिखत।**

**(घ) यथानिर्देशम् उत्तरत : (केवलं प्रश्न त्रयम्)**

i. 'सः भारते अनेकेषु स्थलेषु अटितवान्' अस्मिन् वाक्ये कर्तृपदं किम् ?

(क) सः (ख) अटितवान् (ग) अनेकेषु (घ) स्थलेषु

ii. "एतेषां ग्रन्थानां, वस्तूनां च रक्षणं भवतां कर्तव्यम्" इति अस्मिन् वाक्ये विशेषण पदं चित्वा लिखत।

(क) एतेषां (ख) वस्तूनां (ग) ग्रन्थानां (घ) भवताम्

iii. 'तस्मै स्वानुभवं निवेदितवान्।' अस्मिन् वाक्ये 'तस्मै' इति सर्वनामपदस्य स्थाने संज्ञापदं किं भविष्यति ?

(क) नाविकम् (ख) नायकम् (ग) हर्षाय (घ) ह्यूनत्साङ्गम्

iv. 'शीघ्रम्' इति पदस्य पर्यायपदं चित्वा लिखत।

(क) झटिति (ख) मन्दम् (ग) तृणम् (घ) आद्यम्

**उत्तराणि -**

**(क) एकपदेन उत्तरत:-** i.हर्षचक्रवर्तिनम् ii.ह्यूनत्साङ्गः iii.श्रीहर्षः

**(ख) पूर्णवाक्येन उत्तरत:-**

i. भीतः प्रधाननाविकः उक्तवान् यत् नौकायाः भारः अधिकः अस्ति। झटिति एतानि पुस्तकानि समुद्रे क्षिपन्तु स्व प्राणान् च रक्षन्तु।
ii. ह्यूनत्साङ्गः भारते अनेकेषु स्थलेषु अटित्वा जनानां व्यवहारं भारतीय संस्कृतिम् च ज्ञातवान्।
iii. एतस्यां नौकायां विविधाः भारतीय धर्मग्रंथाः सन्ति ।

**(ग) उचितं शीर्षकं लिखत:-** 'चीनदेशीय यात्री ह्यूनत्साङ्गः / अन्यम् अपि संभाव्यते।

**(घ) यथा निर्देशं उत्तरत:-**

i.सः ii.एतेषां iii.हर्षाय iv.झटिति

**8. अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

भारतदेशः सर्वेषु देशेषु अन्यतमः । अस्य देशस्य प्राकृतिकं सौन्दर्यम् तु अतुलनीयम् एव अस्ति । कुत्रचित् हिमाच्छादितः हिमालयः अस्ति । कुत्र चित् तु सागरः अस्य भारतस्य पादौ प्रक्षालयति । 'कन्याकुमारी' नामक स्थले विविध समुद्राणां सङ्गमस्य दृश्यं तु सर्वेषां मनः हरति । तत्र गत्वा तु जनाः अतीव शान्तिम् अनुभवन्ति । 'कन्याकुमारी' नामकं स्थलं तु शान्ति स्थलं एव अस्ति। भारतस्य पश्चिम भागे स्थितानां प्रदेशानां प्राकृतिक सौन्दर्यम् तु अवर्णनीयम् एव अस्ति । सिक्किम प्रदेशः प्रकृतेः स्थली एव अस्ति। भारते सर्वत्र प्रकृतेः नूतन रूपं एव दृश्यते । ईदृशी विविधता एव भारतस्य सौन्दर्यम्।

**(क) एकपदेन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. कः सर्वेषु देशेषु अन्यतमः अस्ति ?
ii. 'कन्याकुमारी' नामकं स्थलं तु कीदृशं अस्ति ?
iii. भारते कुत्र प्रकृतेः नूतन रूपम् एवं दृश्यते ?

**(ख) पूर्णवाक्येन उत्तरत - (केवलं प्रश्न द्वयम् )**

i. कुत्र समुद्राणां सङ्गमस्य दृश्यं सर्वेषां मनः हरति ?
ii. केषां प्रदेशानां प्राकृतिकं सौन्दर्यम् अतुलनीयम् अस्ति ?
iii. सागरः कस्य पादौ प्रक्षालयति ?

**(ग) गद्यांशस्य उचितं शीर्षकं लिखत।**

**(घ) प्रदत्त विकल्पेभ्यः उचितम् उत्तरं चित्वा लिखत - (केवलं प्रश्न त्रयम् )**

i. -'अनुभवन्ति' इति क्रियापदस्य किं कर्तृपदं ?
(क) जनाः (ख) गुरु (ग) सागराः (घ) प्रदेशाः
ii. 'सिक्किम प्रदेशः प्रकृतेः स्थली एव अस्ति' अस्मिन् वाक्ये किम् अव्ययपदं ?
(क) अपि (ख) एव (ग) च (घ) सदा
iii. 'सागरः अस्य पादौ प्रक्षालयति' अस्मिन् वाक्ये अस्य इति सर्वनामपदं कस्मै प्रयुक्तम् ?
(क) राज्याय (ख) सर्वदा (ग) सागराय (घ) भारताय

iv. 'हिमाच्छादितः हिमालयः अत्र किं विशेष्यपदं अस्ति ?

(क) सर्वदा (ख) अस्य (ग) हिमालयः (घ) अपि

**उत्तराणि-**

**(क) एकपदेन उत्तरत:-** i.भारतदेशः ii.शान्तिस्थलम् iii.सर्वत्र

**(ख) पूर्णवाक्येन उत्तरत:-**

i. कन्याकुमारी नामकस्थले विविध समुद्राणां सङ्गमस्य दृश्यं तु सर्वेषां मनः हरति ।

ii. भारतस्य पश्चिमभागे स्थितानां प्रदेशानां प्राकृतिक सौन्दर्य तु अवर्णनीयम् एवं अस्ति ।

iii. सागरः अस्य भारतस्य पादौ प्रक्षालयति |

**(ग) उचितं शीर्षकं लिखत:-** भारतदेशः / भारतस्य सौन्दर्यम् / अन्यम् अपि संभाव्यते।

**(घ) प्रदत्त विकल्पेभ्यः उचितम् उत्तरं चित्वा लिखत -**

i.जनाः ii.एव iii.भारताय iv. हिमालयः

**9. अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

भारतद्वारं प्रसिद्ध स्मारकं वर्तते। वीराणां बलिदानस्य पुण्य स्मृतिस्थलम् इदम्। अस्मिन् द्वारे वीराणां नामानि उत्कीर्णानि सन्ति। इदम् ऐतिहासिकं भारत द्वारं दृष्ट्वा जनाः नत मस्तकाः भवन्ति। भारत द्वारं परितः हरिताः वृक्षाः शोभन्ते। देश-विदेशेभ्यः आगताः जनाः भारतद्वारं द्रष्टुम् आगच्छन्ति। एतत् द्वारं सर्वान् आकर्षयति। विस्तृताः स्वच्छाः मार्गाः, हरिताः वृक्षाः अस्य शोभां वर्धन्ते। भारतद्वारस्य पार्श्वे 'बोटक्लब' इति पर्यटनस्थलम् अस्ति । अवकाश दिवसे तु जनाः परिवारेण सह अत्र आगच्छन्ति। अत्रागत्य सह भोजनं कुर्वन्ति। रात्रौ विद्युद्दीपकानां प्रकाशैः प्रकाशितं भारतद्वारं दूरात् एव सुशोभते। गणतन्त्र दिवसे स्वतन्त्रता दिवसे च जनाः अत्रागत्य दिवङ्गत सैनिकान् स्मरन्ति तेभ्यः श्रद्धाञ्जलिं च यच्छन्ति। भारतद्वारं भारतस्य गौरवम् अस्ति ।

**(क) एकपदेन उत्तरत - ( केवलं प्रश्न द्वयम् )**

i. भारत द्वारं परितः के शोभन्ते ?

ii. भारतस्य गौरवं किम् ?

iii. भारतद्वारं केषां बलिदानस्य पुण्य स्मृतिस्थलम् ?

**(ख) पूर्णवाक्येन उत्तरत - ( केवलं प्रश्न द्वयम् )**

i. भारतद्वारस्य शोभा के के वर्धन्ते ?

ii. कैः प्रकाशितं भारत द्वारं दूरादेव शोभते ?

iii. के अत्रागत्य सह भोजनं कुर्वन्ति ?

**(ग) अनुच्छेदस्य कृते उपयुक्तं शीर्षकं लिखत।**

**(घ) यथानिर्देशम् उत्तरत :- ( केवलं प्रश्न त्रयम् )**

i. 'स्मरन्ति' इति क्रिया पदस्य कर्तृपदं किम् ?

(क) वीराः (ख) जनाः (ग) पर्यटकाः (घ) सर्वे

ii. 'प्रकाशितम्' इति पदंकस्य विशेषणपदम् अस्ति?

(क) स्मारकस्य (ख) बलिदानस्य (ग) भारतद्वारस्य (घ) भारतस्य

iii. 'निशायाम्' इत्यर्थे अत्र किं पदं प्रयुक्तम्?

(क) प्रकाशे (ख) दिवसे (ग) द्वारे (घ) रात्रौ

iv. 'इदम् ऐतिहासिकं भारतद्वारं दृष्ट्वा जनाः नतमस्तकाः भवन्ति' इति वाक्ये 'इदम् ' सर्वनामपदं कस्मै प्रयुक्तम् ?

(क) स्मारकाय (ख) स्थलाय (ग) भारतद्वाराय (घ) द्वाराय

**उत्तराणि-**

**(क) एकपदेनउत्तरत -** i.वृक्षाः ii.भारतद्वारम् iii.वीराणां

**(ख) पूर्णवाक्येन उत्तरत -**

i. भारतद्वारस्य शोभा विस्तृताः स्वच्छाः मार्गाः हरिताः वृक्षाः च वर्धन्ते।

ii. विद्युद्दीपकानां प्रकाशैः प्रकाशितं भारतद्वारं दूरादेव शोभते।

iii. जनाः अत्रागत्य सह भोजनं कुर्वन्ति।

**(ग) उचितं शीर्षकं लिखत-** 'भारतस्य गौरवं भारतद्वारम्' / अन्यम् अपि संभाव्यते।

**(घ) यथानिर्देशं उत्तरत-**

i.जनाः ii.भारतद्वारस्य iii.रात्रौ iv.भारतद्वाराय

**10.अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

एकदा सर्वे पक्षिणः मिलित्वा उलूकं स्वाधिपतिं विधातुं विचारितवन्तः। तस्य अभिषेक वेलापितैः निश्चिता। ततो यदा अभिषेकोत्सवः प्रारब्धः तदैव कश्चित्वायसः तत्रागच्छत्। उलूकस्याभिषेक-समाचारं श्रुत्वा सोऽवदत् - "भोः । किं विचार्य भवद्भिः एषः दिवान्धः उलूकः राजपदे प्रतिष्ठापयितुं निश्चितः ? यस्य देशस्य राजा एवम् अन्धो भविष्यति तस्य प्रजा अपि तथैव भविष्यति। किं न श्रुतं भवद्भिःयथा राजा तथा प्रजा इति।" ततः सर्वेऽपि तस्य परामर्शं मत्वा यत्र - तत्र प्रस्थिताः। कथैषा पुरातनी परम् अस्याः तात्पर्यं तु अद्यापि अक्षरशः सत्यम् । लोकतान्त्रिक देशेषु यथाराष्ट्र प्रमुखः सर्वकारो वा तथा तस्य देशस्य स्थितिः भवति। अतः राज पदेयोग्य जनः एव प्रतिष्ठापयितव्यः। सम्प्रति यथा नेतारः तथाजनाः।

**(क) एकपदेन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. पक्षिणः कं स्वाभिपतिं विधातुम् उद्यताः ?

ii. यदा अभिषेकोत्सवः प्रारब्धः तदा कः तत्रागच्छत् ?

iii. राजपदे कीदृशः जनः प्रतिष्ठापयितव्यः ?

**(ख) पूर्णवाक्येन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. वायसः उलूकस्य राजपदे प्रतिष्ठापन विषये किम् अवदत् ?

ii. लोकतान्त्रिक देशेषु देशस्य कीदृशी स्थितिः भवति ?

iii. वायसः तत्र कदा आगच्छत् ?

**(ग) अनुच्छेदस्य कृते उपयुक्तं शीर्षकं लिखत |**

**(घ) यथानिर्देशमुत्तरत - (केवलंप्रश्नत्रयम्)**

i. 'काकः' इत्यस्य किं समानार्थक पदं गद्यांशे प्रयुक्तम् ?

ii. 'आगच्छत्' इति क्रियायाः कर्तृपदं गद्यांशात् चित्वा लिखत।

iii. 'नवीना' इत्यस्य विलोमपदं गद्यांशात् चित्वा लिखत।

iv. 'दिवान्धः उलूकः' इत्यनयोः पदयोः विशेषणपदं किम् ?

**उत्तराणि -**

**(क) एकपदेन उत्तरत -** i.उलूकम् ii.वायसः iii.योग्यजनः

**(ख) पूर्णवाक्येन उत्तरत -**

i. वायसः उलूकस्य राजपदे प्रतिष्ठापन विषये अवदत् यत्-"यस्य देशस्य राजा एव अन्धो भविष्यति तस्य प्रजा अपि तथैव भविष्यति।"

ii. लोकतान्त्रिक देशेषु यथा राष्ट्रप्रमुखः सर्वकारो वा तथा तस्य देशस्य स्थितिः भवति।

iii. वायसः यदा उलूकस्य अभिषेकोत्सवः प्रारब्ध: तदैव तत्रागच्छत्।

**(ग) उचितं शीर्षकं लिखत-** वायसः / चतुरः वायसः / यथा राजा तथा प्रजा / अन्यम् अपि संभाव्यते।

**(घ) यथानिर्देशं उत्तरत-** i.वायसः ii.वायसः iii.पुरातनी iv.दिवान्ध:

**11.अधोलिखितम् अनुच्छेदं पठित्वा प्रदतानां प्रश्नानाम् उतराणि लिखत-**

अस्माकं छात्राणामुपरि स्वतन्त्रभारतस्य सम्पूर्णं दायित्वम् अस्ति यतः अद्य विद्यार्थिनः सन्ति ते एव श्वः स्वतन्त्र भारतस्य नागरिकाः भविष्यन्ति। भारतस्य उन्नतिः तेषामेव उन्नत्यां निर्भरा अस्ति। अतःछात्राःस्व भावि जीवनस्य निर्माणम् अतीव सतर्कतया सावधानतया च कुर्युः, इदमेव तेभ्यःअपेक्ष्यते - यत्ते प्रत्येकं क्षणं स्वराष्ट्रं, स्वसमाजं, स्वधर्मं, स्वसंस्कृतिञ्च स्वनेत्रयोः पुरतः निक्षिपेयुः यतः तेषां जीवनेन राष्ट्राय किञ्चिद् बलं प्राप्तुं शक्नुयात् । ये छात्राः राष्ट्रीय दृष्टिकोणात् स्वजीवनस्य निर्माणं न कुर्वन्ति, ते राष्ट्राय, समाजाय वा भारभूताः एव भवन्ति । वि द्यार्थिनां लक्ष्यं विद्योपार्जनमेवास्ति। विद्योपार्जनं कृत्वा एव ते राष्ट्रं प्रति स्व कर्तव्यस्य निर्वाहं कर्तुं शक्नुवन्ति ।

**(क) एकपदेन उत्तरत- (केवलं प्रश्न द्वयम्)**

i. छात्राणामुपरिकस्य दायित्वम् अस्ति ?

ii. विद्यार्थिनां लक्ष्यं किम् ?

iii. श्वः स्वतन्त्र भारतस्य नागरिकाः के भविष्यन्ति ?

**(ख) पूर्ण वाक्येन उत्तरत - (केवलं प्रश्न द्वयम्)**

i. कीदृशाः छात्राः राष्ट्राय समाजाय वा भारभूताः एव भवन्ति?

ii. किं कृत्वा छात्राः स्व कर्तव्यस्य निर्वाहं कर्तुं शक्नुवन्ति ?

iii. कस्य उन्नतिः तेषामेव उन्नत्यां निर्भरा अस्ति ?

**(ग) गद्यांशस्य कृते उपयुक्तं शीर्षकं लिखत ।**

**(घ) यथानिर्देशम् उत्तरत - (केवलं प्रश्न त्रयम्)**

i. "छात्राःराष्ट्रीय दृष्टिकोणात् स्वजीवनस्य निर्माणं न कुर्वन्ति" अस्मिन् वाक्ये कर्तृ पदं किम् ?

(क) स्वजीवनस्य (ख) निर्माणे (ग) कुर्वन्ति (घ) छात्राः

ii. "लोचनयोः" पदस्य पर्यायपदं अनुच्छेदे किम् ?

(क) लक्ष्यम् (ख) नेत्रयोः (ग) स्वधर्मं (घ) निर्वाहम

iii. "अवनतिः" पदस्य विपरीतपदं अनुच्छेदे किम् ?

(क) प्रोन्नतिः (ख) पतनम् (ग) उन्नतिः (घ) निर्वाहम्

iv. " स्वतन्त्रभारतस्य नागरिकाः भविष्यन्ति" अस्मिन् वाक्ये क्रियापदं किं अस्ति?

(क) प्रोन्नतिः (ख) परतन्त्र (ग) उन्नतिः (घ) भविष्यन्ति

**उत्तराणि -**

**(क) एकपदेनउत्तरत:-** i.स्वतन्त्रभारतस्य ii.विद्योपार्जनं iii.विद्यार्थिनः

**(ख) पूर्णवाक्येन उत्तरत:-**

i. ये छात्राः राष्ट्रीय दृष्टिकोणात् स्वजीवनस्य निर्माणं न कुर्वन्ति, ते राष्ट्राय, समाजाय वा भारभूताः एव भवन्ति ।

ii. विद्योपार्जनं कृत्वा एव ते राष्ट्र प्रति स्व कर्तव्यस्य निर्वाह कर्तुं शक्नुवन्ति ।

iii. भारतस्य उन्नतिः पतनञ्च तेषामेव उन्नति-पतनयोः निर्भरो स्तः।

**(ग) उचितं शीर्षकं लिखत:-**छात्राणां दायित्वम् / कर्तव्य निर्वाहः/विद्योपार्जनम् / अन्यम् अपि संभाव्यते।

**(घ) यथानिर्देशं उत्तरत-** i.छात्राः ii.नेत्रयोः iii.उन्नतिः iv.भविष्यन्ति

## औपचारिकं पत्रम्

**1. प्रदत्त- मञ्जूषायाः सहायतया अवकाश-प्राप्ति हेतोः प्रधानाचार्य-महोदयं प्रति लिखितं पत्रं पूरयित्वा पुनः लिखत।**

| **मञ्जूषा -** कारणात्, अनुगृहीतं, निवेदनम्, सेवायाम्, महोदय, प्रधानाचार्यः, ज्वरपीडितः, असमर्थः, विश्रामं, अवकाशं |
|---|

(i)......................

(ii)....................महोदयः,

क. ख. ग. विद्यालयः,

अ.ब.स. प्रदेशः ।

(iii)..................,

सविनयं (iv) ...................... अस्ति यत् गत रात्र्याः अहं (v) ................अस्मि। अस्मात् (vi)

..............अहं विद्यालयम् आगन्तुं (vii) ..........अस्मि । चिकित्सकः मह्यम् (viii) ................कर्तुम् परामर्शं ददाति। अत एव दिनद्वयस्य (ix) ..................प्रदाय (x) .................. करोतु अत्र भवान्।

भवदीयः आज्ञाकारी शिष्यः,

सुमितः।

कक्षा - दशमी

तिथि ....................

| **उत्तराणि-** (i) सेवायाम् (ii) प्रधानाचार्यः (iii) महोदय (iv)निवेदनम् (v) ज्वरपीडितः (vi) कारणात् (vii) असमर्थः (viii) विश्रामं (ix) अवकाशं (x) अनुगृहीतं |
|---|

**2. प्रदत्त-मञ्जूषायाः सहायतया स्वक्षेत्रस्य स्वच्छता हेतोः स्वास्थ्याधिकारिणं प्रति लिखितं पत्रं पूरयित्वा पुनःलिखत ।**

| **मञ्जूषा-** निवासी, जलमपि, रोगाणां, श्रीमन्, स्वास्थ्याधिकारि-महोदयाः, वातावरणम्, स्वच्छतायाः, धन्यवादः, कीट-मक्षिकाणाम्, अवकरस्य |
|---|

सेवायाम्

श्रीमन्तः (i) .................. ,

क. ख. ग. क्षेत्रम्,

अ.ब.स. नगर-निगमः

(ii) ......................!

निवेदनम् अस्ति यत् अहं क. ख. ग. क्षेत्रस्य (iii) ..............अस्मि । अस्माकं क्षेत्रे सर्वत्र (iv)..............दूषितमस्ति । मार्गेषु वीथिषु च (v) .....................भण्डारः अस्ति। गर्तेषु(vi) ......................दृश्यते। (vii) ..............बाहुल्येन मलेरिया-डेंगू-आदीनां (viii) ....................संभावना वर्तते। अतः यथाशीघ्रं स्वास्थ्य रक्षनार्थं (ix) ..................प्रबन्धं क्रियताम्।

(x) .....................।

निवेदकः

प्रधानः

रेसिडेंस वेलफेयर एसोसिएशन

क. ख. ग. क्षेत्रम्

दिनाङ्कः .................

| **उत्तराणि-** (i) स्वास्थ्याधिकारि-महोदयाः (ii) श्रीमन् (iii) निवासी (iv) वातावरणम् (v) अवकरस्य (vi) जलमपि (vii) कीट-मक्षिकाणां (viii) रोगाणां (ix) स्वच्छतायाः (x) धन्यवादः |
|---|

**3. भवान् विकासः । भवतः निवासः छात्रावासे अस्ति। दिल्लीनगरे संस्कृतसंभाषणशिविरे प्रतिभागित्वं कर्तुम् इच्छति। प्रधानाचार्यं प्रति लिखिते पत्रे शब्दसूची सहायतया रिक्तस्थानपूर्तिं कुरुत ।**

| **मञ्जूषा -**सूचनापट्टे, तस्मिन्, तेषु, प्रदाय, दिसम्बरमासे, भवदीयः, महोदयः, सधन्यवादम्, भविष्यति, विकास: |
|---|

सेवायाम्
श्रीमान् प्रधानाचार्य: (i) ..................
क. ख.ग. संस्कृत विद्यालयः
अ.ब.स. नगरम्।
महोदय,
सविनय निवेदनं अस्ति यत् विद्यालयस्य (ii) .................. एकं विज्ञापनम् अस्ति। तत्र लिखितं यत् दिल्लीनगरे (iii) .............एकं विशेषं संस्कृतसंभाषण-शिविरं (iv)................।अहम् अपि (v)................... शिविरे प्रतिभागित्वं कर्तुम् इच्छामि।
कृपया भवन्तः तदर्थं स्वीकृतिं (vi) ............... अनुगृहीतं कुर्वन्तु। विद्यालये तु (vii)...............दिवसेषु अवकाशः एवभविष्यति। (viii)................... (ix)..............आज्ञाकारी शिष्यः,(x) ...............................
कक्षा दशमी
क. ख.ग. छात्रावासतः
कक्षा संख्या 20
दिनांकः ...................

| **उत्तराणि-** (i) महोदय: (ii) सूचनापट्टे (iii) दिसम्बरमासे (iv) भविष्यति (v) तस्मिन् (vi) प्रदाय (vii) तेषु (viii) सधन्यवादम् (ix) भवदीयः (x) विकासः |
|---|

**4. प्रदत्त-मञ्जूषायाः सहायतया पुस्तकप्रेषणार्थं पुस्तकप्रकाशकं प्रति पत्रं पूरयित्वा लिखत।**

| **मञ्जूषा-** दशमीकक्षायाः, वी.पी. पी., पुस्तकसूचीपत्रम्, क्रेतुम्, प्रकाशकः, श्रीमन्, धनञ्जयः, धन्यवादः, विषयः, प्रेषणीयानि |
|---|

सेवायाम्
श्रीमान् (i) ............. महोदयः ,
क. ख. ग. प्रकाशनम्,
अ.ब.स. नगरम्।
(ii) ............. दश पुस्तकानि प्रेषणार्थम्।
(iii) .............

निवेदनं अस्ति यत् अहं (iv) ................ छात्रः अस्मि । मया युष्माकं (v) ................... अवलोकितम् ।अहम् दश पुस्तकानि
(vi) .............. इच्छामि।कृपया अधोलिखितानि पुस्तकानि (vii) ................ द्वारा यथाशीघ्रं (viii) ................... ।

पुस्तकनामानि प्रति

1. संस्कृत-व्याकरणवीथिः 2
2. संस्कृत-अभ्यासवान् भव 2
3. पंचतन्त्रम् 2
4. शेमुषी द्वितीयो भागः 2
5. अनुवाद चन्द्रिका 2

(ix) .................... ।
भवदीयः (x) .................. ।
क. ख. ग. नगरम्,
दिनांकः ...............

**उत्तराणि-**(i) प्रकाशक: (ii) विषयः (iii) श्रीमन् (iv) दशमीकक्षायाः (v) पुस्तकसूचीपत्रम् (vi) क्रेतुम् (vii) वी.पी. पी. (viii) प्रेषणीयानि (ix) धन्यवादः (x) धनञ्जय:

**5. विद्युत-आपूर्ति विषयकं पत्रम्।**

**मञ्जूषा-**निवसामि, अहम्, आयाति, विद्युत्, अद्यत्वे, आपूर्तिः, दशायाम्, विना,तीव्रम् , साध्यम्

312, सुभाषनगरम्,
गुरुग्रामः ।
दिनांक 03.11.2024
सेवायाम्
अधीक्षक-अभियन्ता,
विद्युत्-संगठनम्,
गुरुग्रामः ।

श्रीमन्तः,
(i).................. सुभाषनगरे (ii) ............... । अत्र(iii) ............... कदापि न अयाति। यदि (iv) ..................शीघ्रमेव लुप्ता भवति। (v) ........... विद्युतं विना किञ्चिदपि कार्य न (vi) ................. । अधुना सूर्यदेव: (vii) ............ तपति। न व्यजनयन्त्रं, न शीतकारियन्त्रं विद्युतं(viii) .............चलति। अस्याम् (ix) ................

सर्वेजना: महत् कष्टम् अनुभवन्ति। विद्युतः(x) .................सम्यक् भवेद् इति अस्माकं प्रार्थना।
प्रार्थी, देवनारायण:।

| **उत्तराणि -** (i) अहम् (ii) निवसामि (iii) विद्युत् (iv) आयाति (v) अद्यत्वे (vi) साध्यम् (vii) तीव्रम् ( viii) विना (ix) दशायाम् (x) आपूर्ति |
|---|

**6. जलापूर्ति विषयकं पत्रम्।**

| **मञ्जूषा-** निवसामि, यथशीघ्रम् , तीव्रम्, काले, कोलाहलः, सम्यक्, पक्षिण:, श्रीमन्त:, अस्य, केवलम् |
|---|

34, प्रेमनगरम्,
हिसारम्।
दिनांक 14.11.2024
अधीक्षक महोदयः
जलसंगठनम्,
हिसारम् ।
(i) ................,
अहं नगरस्य प्रेमनगरे (ii) .............। (iii) ............. उपनगरस्य जलापूर्ति : बाधिता अस्ति। प्रातः(iv) ............जलम् न आयाति, सायमपि स्वल्पम् आयाति। अद्यत्वे ग्रीष्मतौं भगवान् भास्कर: (v) ................. तपति। एतादृशे(vi) .....................जीवनयापनं जलं विना अति दुष्करं जातम्। यत्र तत्र 'त्राहि त्राहि' अति(vii)............. ।न (viii).........मनुष्याः, अपित् पशव: (ix) ............च अपि जलाभावेन व्याकुला: सन्ति। भवन्तं प्रार्थये यत् जलापूर्ति: समाधानं (x) ............. भवेत् । सधन्यवादम्।
प्रार्थी,
रमेशचन्द्र:।

| **उत्तराणि-** (i) श्रीमन्त: (ii) वसामि (iii) अस्य (iv) काले (v) तीव्रम् (vi) सम्यक् (vii) कोलाहलः (viii) केवलम् (ix) पक्षिण: (x) स्वल्पम् |
|---|

**7. विद्यालये पुनः नाम लेखनाय प्रधानाचार्य प्रति पत्रम्।**

| **मञ्जूषा-** माम्, नाम, प्रार्थयामि, पीडितः, मम, अस्ति, रुग्णः, अहम्, माम्,दिवसा: |
|---|

राजकीय विद्यालयः, हिसारम्।
प्रधानाचार्य: महोदयः,

श्रीमन्तः,
निवेदनम् (i).............यत् अहं गतमासे (ii) ...........अभवम्। (iii) ................पाण्डुरोगेण (iv) .............

आसम्। मम पिता उपचारार्थं (v)................ दिल्लीनगरम् अनयत्। उपचारे पञ्चदश(vi) ................ व्यतीताः। मया ज्ञातम् यत् अनुपस्थिति वशात् पंजिकातः (vii) ..................नाम निरस्तम् । अहं (viii) ................यत् भवान् मम(ix) ................. पुनः लेखयित्वा (x) ......................अनुगृहणन्तु।
आज्ञाकारी शिष्यः,

देवेन्द्रः।
दशमी कक्षा।
दिनांक 16.09.2024

| **उत्तराणि -**(i) अस्ति, (ii) रुग्णः, (iii) अहम्, (iv) पीडितः , (v) माम्, (vi) दिवसाः, (vii) मम, (viii) प्रार्थयामि, (ix) नाम, (x) माम् |
|---|

**8. शुल्कक्षमार्थं प्रधानाचार्यं प्रति पत्रम्।**

| **मञ्जूषा-** माम्, शुल्क,कठिनम्, अहम्, निवेदनम् ,कक्षायाम् , अहम्,पिता, कार्यालये, वेतनम् |
|---|

सेवायाम्,
प्रधानाचार्य; महोदयः,
देवविद्यालयः, नव देहली ।

श्रीमन्तः,
(i) ................. अस्ति यत्(ii) ...............भवताम् विद्यालये नवम्यां(iii) ............. पठामि।मम (iv) .............. एकस्मिन् (v) .................लिपिकः अस्ति। तस्य (vi) .................. अपि सामान्यम् अस्ति। वेतनेन परिवारस्य भरणम् अपि(vii) ................।अहं विद्यालयस्य(viii) ..................प्रदाने असमर्थः अस्मि । अतः (ix)...............प्रार्थये यत् शुल्कक्षमाप्रदानेन (x) .................... अनुगृहणन्तु श्रीमन्तः।
आज्ञाकारी शिष्यः ,
मेघकान्तः।
दशमी कक्षा।
दिनांक17.08.2024

| **उत्तराणि -**(i) निवेदनम्, (ii) अहम्, (iii) कक्षायाम्, (iv) पिता, (v) कार्यालये, (vi) वेतनम्, (vii) कठिनम्, (viii) शुल्क, (ix) अहम्, (x) माम् |
|---|

**9. विद्यालयात् अवकाशार्थं प्राचार्यम् प्रति पत्रं मञ्जूषायाः दत्तपदैः पूरयत।**

| **मञ्जूषा -**मान्यवर, भवदीयः, कारणात्, अहम्, महानगरम्, प्राचार्यामहोदयः, आगन्तुम्, दिनद्वयस्य, निवेदनम्, कृतज्ञः |
|---|

सेवायाम्

(i) ............

केन्द्रीय विद्यालयः

(ii) .............

(iii) ............

सविनयं (iv) .............. अस्ति यत् अहम् अद्य विद्यालये (v) ............... न शक्नोमि । तस्मात् (vi) ............... मह्यं (vii) ............. अवकाशं प्रदाय कृतार्थं कुर्वन्तु भवन्तः (viii) ............... भवतः अतीव (ix) .................... भविष्यामि।

सधन्यवादः

(x) ............ शिष्यः

क. ख. ग.

| **उत्तराणि-** (i) प्राचार्यमहोदयः (ii) कोलकाता महानगरम् (iii) मान्यवर (iv) निवेदनम् (v) आगन्तुम् (vi) कारणात् (vii) दिनद्वयस्य (viii) अहम् (ix) कृतज्ञः (x) भवदीयः |
|---|

**10.दण्ड शुल्क क्षमार्थं प्रधानाचार्यं प्रति पत्रम्।**

| **मञ्जूषा-**कक्षायाम्, विद्यालये, अहम्, निवेदनम्, श्रीमन्तः, भवताम्, अयम्, दण्डितः, ज्वरेण, परीक्षा |
|---|

सेवायाम्,

प्रधानाचार्यः महोदयः,

क.ख.ग. विद्यालयः, सैनिक विहारम् ।

(i) ..................

सेवायां (ii) ................. अस्ति यत् (iii) ........... भवतां (iv) .............. नवम्यां (v) ............... पठामि। ह्यः गणितस्य (vi) ............ आसीत्। अहं तीव्रेण (vii) .............. आक्रान्तः आसम्। अध्यापकेन पञ्च रूप्यकेण (viii) ........... । श्रीमन्तः प्रार्थयन्ते यत् (ix) ............. शुल्कदण्डः, क्षन्तव्यः। अहं (x) ............... धन्यवादं करोमि ।

आज्ञाकारी शिष्यः,

ललित नारायणः।

नवमी कक्षा ।

दिनाङ्क 19.06.2024

| **उत्तराणि-** (i) श्रीमन्तः, (ii) निवेदनम्, (iii) अहम्, (iv) विद्यालये, (v) कक्षायाम्, (vi) परीक्षा, (vii) ज्वरेण, (viii) दण्डितः, (ix) अयम्, (x) भवताम् |
|---|

# अनौपचारिकं पत्रम्

**1. भवान् पीयूषः। स्वमित्र महेशं प्रति परीक्षा सफलतायाम् लिखितं पत्र मञ्जूषायां प्रदत्त पदैः पूरयत।**

| **मञ्जूषा -**पितृभ्याम्, संतोषः, अङ्कान् , साधुवादान्, कामये, प्राप्तम्, मित्रम्, सप्रेम नमस्ते, अहोरात्रं, समाप्तौ |
|---|

परीक्षाभवनम्

दिल्लीत:

दिनांक: ....................

प्रिय महेश,

(i) ................।

अत्र कुशलम् तत्रास्तु। भवत: परीक्षासफलता-पत्रम् अधुनैव (ii) ......... । भवत: उत्तीर्णतां ज्ञात्वा अति (iii) ..............अभवत्। (iv) ............. प्रयासं विधाय भवान् 98 प्रतिशतम्(v) .............. लब्धवान्। त्वं मम परिवारजनस्य(vi) ............. अर्हसि। पत्र- (vii) .............. तुभ्यं पुनः वर्धापनं (viii)..............।

(ix) ............... सादरं नमः ।

भवत: (x) ................

पीयूष:।

| **उत्तराणि-** (i) सप्रेम नमस्ते (ii) प्राप्तम् (iii) संतोष: (iv) अहोरात्रं (v) अङ्कान् (vi) साधुवादान् (vii) समाप्तौ (viii) कामये (ix) पितृभ्याम् (x) मित्रम् |
|---|

**2. भवान् दीपक:। दिल्लीनगरे छात्रावासे स्थित्वा अध्ययनं करोति। पितरं प्रति धनं प्रेषण विषये लिखिते पत्रे रिक्तस्थानानि मञ्जूषायां प्रदत्तपदानां सहायतया पूरयत ।**

| **मञ्जूषा -**रुप्यकाणि, क्रेतुम्, धनस्य, अहर्निशम्, चरणवन्दना, भवताम्, पत्रोत्तरम्, दिल्लीत:, पुस्तकालयस्य, प्रणामाः |
|---|

छात्रावासः

(i) ...............

दिनांक: ..........

श्रद्धेये पितृचरणे

(ii) ...............।

अत्र कुशलम् तत्रास्तु इति भगवन्तम् (iii)............ प्रार्थयामि । यद्यपि अत्र छात्रावासे सर्वं सुव्यवस्थितम् अस्ति, तथापि(iv) ........... सान्निध्यस्य अभाव: अस्ति। परीक्षाकाल: समुपस्थित:, तदर्थं कानिचित् पुस्तकानि (v) ............. इच्छामि।यदि कष्टकरं न भवेत् तर्हि पञ्चशतम् (vi) ..................... अविलम्बं प्रेषयन्तु। (vii) ............. अभावे अहं मित्राणां (viii) ................च सहायतया कार्यं सम्पादयामि। मात्रे मम (ix) ............ निवेदनीयाः । गृहे सर्वेभ्य: यथायोग्यं नमः।

(x).........यथाशीघ्रं प्रदातव्यम्।

भवदात्मज:, दीपक:।

| **उत्तराणि-** (i) दिल्लीत: (ii) चरणवन्दना (iii) अहर्निशम् (iv) भवताम् (v) क्रेतुम् (vi) रुप्यकाणि (vii) धनस्य (vi) पुस्तकालयस्य (ix) प्रणामा: (x) पत्रोत्तरम् |
|---|

**3. भवत: नाम विजयः अस्ति। विद्यालयस्य प्रतियोगितासु भवता अनेकानि पदकानि जितानि। अस्मिन विषये इन्दौरनगरे निवसन्तं स्वमित्रं प्रति लिखिते पत्रे रिक्तस्थानानि पूरयत।**

| **मञ्जूषा -**प्रणामाञ्जलि: , दिल्लीनगरात्, धावनम्, स्थापितम्, रोचन्ते, गृहीत: , उच्चाङ्कान्, सस्नेहं, अभिन्नमित्रम्, विलम्बेन |
|---|

15, रंगनाथन-छात्रावास:

(i) ......................

तिथि:...................

प्रिय मित्र माधव,

(ii) ................नमस्ते।

अत्र कुशलं तत्रास्तु। अहं विद्यालय -प्रतियोगितासु अति व्यस्तः आसम्, अतः (iii ) ............पत्रं लिखामि। क्षम्यताम्। त्वं जानासि एवं यत् (iv) .............खेला: च मह्यम् अति (v) ............ । मया अनेकासु प्रतियोगितासु भागः (vi) ............।100 मीटर धावन प्रतियोगितायां मया रजतपदकं 400) मी० धावन प्रतियोगितायां च स्वर्णपदकं जितम्। 400 मी० धावन प्रतियोगितायां मया नवकीर्तिमानं (vii) ...............।

इदानी प्रतियोगिता: समाप्ताः । आगामिमासे एवं अर्धवार्षिक - परीक्षा भविष्यति। स्वशिक्षकाणां मार्गदर्शनेन स्वपरिश्रमेण च अहं सर्वेषु विषयेषु (viii) .........प्राप्स्यामि। तव पितृभ्याम् मम (ix) ..............निवेद्यते।

तव (x) ...............

विजयः।

| **उत्तराणि-** (i) दिल्लीनगरात् (ii) सस्नेहं (iii) विलम्बेन (iv) धावनम्, (v) रोचन्ते (vi) गृहीत: (vii) स्थापितम् (viii) उच्चाङ्कान् (ix) प्रणामाञ्जलि: (x) अभिन्नमित्रम् |
|---|

4. **भवान् सुमितः विद्यालयस्य वार्षिकोत्सव-विषये पितरं सूचयन् लिखितेऽस्मिन् पत्रे मञ्जूषायाः उचितपदानि चित्वा रिक्तस्थानानि पूरयत।**

| **मञ्जूषा-**निमंत्रणपत्रम्, धावनप्रतियोगितायां, मातृचरणयोः, सुमितः, उत्साहवर्धनम्, वार्षिकपरीक्षायाम्, प्रथमम्, पितृमहोदयाः, प्राप्स्यन्ते, वाराणसीतः |
|---|

रामानुज छात्रावास:
(i) ...............
तिथि 05.07.2024
पूज्या(ii) ................
सादरं नमो नमः
अत्र कुशलं तत्रास्तु । इदं ज्ञात्वा भवान् अतिप्रसन्नः भविष्यति यत् गत दिवसे अंतर्विद्यालयीय वादविवाद प्रतियोगितायां मया(iii) ..................स्थानम् प्राप्तम्। क्रीडादिवसे(iv)................ अहम् एव प्रथमः आसम् । अस्य वर्षस्य अष्टम कक्षायाः(v) ...............अपि मया एव प्रथमं स्थानं लब्धम् । अस्मिन् वर्षे वार्षिकोत्सवे मया त्रयः पुरस्काराः (vi) ................। अयं वार्षिकोत्सवः आगामि बुधवासरे आयोजयिष्यते। विद्यालयस्य पक्षतः ह्मः एव (vii)............ प्रेषितम्। अहमपि भवन्तम् सूचयामि यद् भवान् मात्रा सह अवश्यम् आगच्छतु। मम(viii) .......... भविष्यति(ix) .............मम प्रणामः, भगिन्यै स्नेहः ।
भवतः पुत्रः
(x) .............

| **उत्तराणि-**(i) वाराणसीतः, (ii) पितृमहोदयाः, (iii) प्रथमम्, (iv )वनप्रतियोगितायाम्, (v) वार्षिकपरीक्षायाम्, (vi) प्राप्स्यन्ते, (vii) निमन्त्रणपत्रम्, (viii) उत्साहवर्धनम्, (ix) मातृचरणयोः, (x) सुमितः |
|---|

5. **भवतः नाम महेशः अस्ति। विद्यालये क्रीडादिवससमारोहः आयोजितः। तस्य वर्णनम् अधिकृत्य मित्रं राघवं प्रतिलिखिते पत्रे रिक्तस्थानानि पूरयत ।**

| **मञ्जूषा -** एकतायाः, स्थानं, अद्वितियम् , प्रदर्शनम्, क्रीडाप्रतियोगिता, महेशः, विविधासु, राघव, अस्माकं, प्रमुदिताः |
|---|

लेन् -7, प्रगति विहारात्
तिथिः 10.07.2024
प्रिय(i) ............... !
सप्रेम नमस्ते। ह्यः एव(ii) ............विद्यालये (iii) .........आयोजिता । अहं तस्मिन् समारोहे(iv) .........क्रीडासु भागं गृहीतवान्। धावन प्रतियोगितायां मया प्रथमं(v) .........प्राप्तम्। पदकन्दुक क्रीडायाम् अपि अस्माकं दलस्य अवर्णनीयं (vi) ............ एव आसीत्। धावनप्रतियोगितायाः प्रदर्शनम् तु (vii)

.......... एव। एतद् दृष्ट्वा सर्व एव(viii) ........... अभवन्। एतत् तु सत्यं एव यत् क्रीडाप्रतियोगिता तु परस्परं(ix) ............. भावनां प्रसारयति ।

भवदीयम् अभिन्नं मित्रम्।

(x) ....................

| **उत्तराणि-**(i) राघव (ii) अस्माकम् (iii) क्रीडाप्रतियोगिता (iv) विविधासु (v) स्थानम् (vi) प्रदर्शनम् (vii) अद्वितियम् (viii) प्रमुदिता: (ix) एकताया: (x) महेश: |
|---|

**6. भवतः नाम समीरः अस्ति भवान् च चण्डीगढ - नगरे वसति। नवदिल्ली स्थित मित्रं स्वविद्यालयस्य वार्षिकोत्सवं वर्णयन् लिखितं एतत् पत्रं उचित-पदैः पूरयत ।**

| **मञ्जूषा-** प्रस्तुता, सुसज्जितः, अहम्, चण्डीगढतः, वितरणम्, नमस्ते, कुशलं, अवसरे, वार्षिकोत्सव, शिक्षानिर्देशकः |
|---|

(i) ..................

प्रिय मित्र रमेश,

सस्नेह (ii) ............ ।

अत्र (iii) ............. तत्रास्तु । अद्य (iv) ............. स्वविद्यालयस्य (v) ................ वर्णयामि। अस्मिन् (vi) .................. मम विद्यालयः पत्रलताभिः (vii) ............... आसीत्। (viii) ................. महोदयः समारोहस्य मुख्यातिथिः आसीत्। छात्रैः एका लघुनाटिका (ix) ................ । एकस्याः कन्यायाः मनोहरं नृत्यं अपि अभवत्। मुख्यातिथिमहोदयेन पुरस्काराणाम् (x) ................... अपि कृतम्। शेषं मिलित्वा कथयिष्यामि।

भवत: मित्रम्,

समीरः ।

दिनाङ्क 10.08.2024

| **उत्तराणि -** (i) चण्डीगढतः, (ii) नमस्ते, (iii) कुशलम्, (iv) अहम्, (v) वार्षिकोत्सवम्, (vi) अवसरे, (vii) सुसज्जितः, (viii) शिक्षानिर्देशक:, (ix) प्रस्तुता, (x) वितरणम् |
|---|

**7. भवान् राघवः। प्लास्टिकस्य प्रयोगः पर्यावरण-नाशकः इति विषयम् अधिकृत्य मित्रम् अंकुरं प्रति लिखिते पत्रे रिक्तस्थानानि पूरयत।**

| **मञ्जूषा-**कुर्मः, ज्ञातम्, प्लास्टिकं, मातृचरणेषु, नवदिल्लीतः, पर्यावरणस्य, रक्षणे, नमः, राघवः, अंकुर |
|---|

विश्वनीड :

(i) ................

दिनाङ्क 08.02.2025

प्रिय मित्र (ii) ............. ।

सस्नेहं (iii) ................ ।

अत्र कुशलम् तत्रास्तु। ह्यः एव मम विद्यालये 'त्यज प्लास्टिकम् रक्ष पर्यावरणम्' इति विषये एका गोष्ठी अभवत्। अत्रैव मया प्रथमवारं (iv) ..................यत् प्लास्टिकस्य दूरगामिनः घातकाः च परिणामाः भवन्ति। अन्यानि सर्वानि वस्तूनि मृत्तिकायां विनश्य विलीयन्ते परं(v) ............... तु कदापि न अपक्षीयते। न इदं गलति न च विलीयते। एवं हि (vi) ................कृते महती क्षतिः भवति । परं वयं प्रातः जागरणात् आरभ्य रात्रौ निद्रा पर्यन्तं प्लास्टिकस्य विविध वस्तूनां प्रयोगं (vii) .................. । किमधिकम् - इदं कलमं येन अहं लिखामि, अस्य च मसियष्टि उभे एव प्लास्टिक निर्मिते। कल्पयामि यदि एवमेव प्लास्टिकस्य प्रयोगः वर्धिष्यते तर्हि किं भविष्यति? वस्तुतः पर्यावरणस्य(viii) .............. एव अस्माकं रक्षणम् । आशासे त्वमपि जागरूकः भूत्वा अन्येभ्यः अपि प्रेरणां प्रदास्यसि।

गृहे(ix) ...........मम प्रणामाः ।

भवतः मित्रम्

(x)................

| **उत्तराणि -** (i) नवदिल्लीतः, (ii) अंकुर, (iii) नमः, (iv) ज्ञातम्, (v) प्लास्टिकम्, (vi) पर्यावरणस्य, (vii) कुर्मः, (viii) रक्षणे, (ix) मातृचरणेषु, (x) राघवः |
|---|

**8. स्वजन्मदिवसे मित्रं प्रति लिखितं पत्रं मञ्जूषायां प्रदत्तपदैः पूरयत।**

| **मञ्जूषा-** वर्धस्व, जन्मदिवसः, ज्ञात्वा, परीक्षाभवनात्, आयोजनम्, पञ्चवादने, मित्राणि, निमन्त्रणम्, दिनेशः, समारोहस्य |
|---|

(i) ..................

दिल्लीनगरम्,

दिनांक 16.09.2024

प्रियमित्र राघव,

मधुरस्मृतयः ।

अत्र कुशलं तत्रास्तु। भवान् इदम् (ii) ..................अत्यधिकं हर्षितः भविष्यति यत् मम (iii)............... आगामिरविवासरे भविष्यति प्रतिवर्षमिव मम जनकेन लघु समारोहस्य (iv) ...............आयोजनं करिष्यति, पूजायाः कार्यक्रमः (v) ...............भविष्यति। सर्वाणि अपि मम(vi) ............ आगमिष्यन्ति । तुभ्यम् अपि(vii) ..........प्रेषयामि । अतएव समये आगत्य(viii) ............ शोभाम् (ix) ............... ।

तव अभिन्नम् मित्रम्

(x) ................

**उत्तराणि -** (i) परीक्षाभवनात्, (ii) ज्ञात्वा, (iii) जन्मदिवसः, (iv) आयोजनम्, (v) पञ्चवादने, (vi) मित्राणि, (vii) निमन्त्रणम्, (viii) समारोहस्य, (ix) वर्धस्व, (x) दिनेश:

9. **भवतः नामः गौरवः अस्ति। भवान् च छात्रावासे वसति । स्वजीवनस्य उद्देश्यं वर्णयता पितरं प्रतिलिखिते पत्रे मञ्जूषातः उचितपदानि विचित्य रिक्तस्थानानि पूरयत ।**

**मञ्जूषा-** स्वास्थ्यं, पर्याप्ताः, भवदाज्ञाकारी, दिल्लीतः, पितृमहोदय, अनेकैः, उन्मूलयितुम्, जीवनस्य, एव, चिकित्सकः

भवतः नामः गौरवः
राजकीय विद्यालय छात्रावासः
(i) ..................
पूज्य (ii) ..................
सादर प्रणामाः ।
अत्र कुशलं तत्रास्तु। मम (iii) ................ किं लक्ष्यम् अस्ति इति विषयम् अधिकृत्य अहं स्व मनोभावान् लिखामि। अहम् एक योग्यः (iv) ............
भवितुम् इच्छामि। भवान् तु जानाति यत् अस्माकं देशः (v) .............. प्रति जागरूकः नास्ति । लक्षाधिकजना: प्रतिवर्ष (vi) .............. रोगैः ग्रस्ता भूत्वा काल कवलिताः भवन्ति। सर्वकारैः रोगान् (vii) ................... प्रयासाः क्रियन्ते तथापि ते प्रयासाः (viii) ............. न सन्ति। अतः अहं योग्यः चिकित्सकः भूत्वा देशं सेवितुम् इच्छामि। एवं च मम जीवनस्य लक्ष्योऽपि अयम् (ix) ................. भविष्यति। विस्तरेण तु पुनः लेखिष्यामि।
(x) ...........................
गौरवः ।
दशमी कक्षा।

**उत्तराणि -** (i) दिल्लीत:, (ii) पितृमहोदय, (iii) जीवनस्य, (iv) चिकित्सक:, (v) स्वास्थ्यम्, (vi) अनेकै: (vii) उन्मूलयितुम्, (viii) पर्याप्ताः, (ix) एव, (x) भवदाज्ञाकारी

10. **भवान् वैभवः अस्ति। अध्ययनोपेक्षावशात् कनिष्ठ भ्रातरं प्रति पत्रं मञ्जूषायाः उचितपदानि विचित्य रिक्तस्थानानि पूरयत।**

**मञ्जूषा-** नियमस्य, भ्राता, विश्रामस्य, उच्चैः, आदरणीयाभ्याम्, आशीष :, विवरणपत्रम्, समयम्, नियमेन, व्यर्थकार्येषु

छात्रावासः ।

तिथिः 17.10.2024

प्रिय अनुज ।

सप्रेम (i) ........................ ।

अत्र कुशलम् तत्रास्तु। अद्यैव एव पितुः पत्रं प्राप्तम्। विद्यालयात् त्वया ये अंकाः प्राप्ताः तेषाम् (ii) ........ अपि तेन सहैव प्राप्तम्। तत् पठित्वा अहम् अतीव दुखितोऽस्मि । तव अङ्काः सर्वेषु अपि विषयेषु न्यूनाः सन्तिइति आश्चर्यकरम्। मन्ये त्वम् (iii) ............ न प्रवर्तसे (iv) ............ व्यर्थम् अतिवाहयसि। त्वयासमयेन एव सर्वम् कर्त्तव्यम् । पठनस्य समये पठनं, खेलनस्य समये खेलनं (v) ............... समये विश्रामः च कर्तव्यः।मनसा पठनीयम्।

ये पठन्ति ते उच्चैः पदं, सुखं, धनं यशश्च लभन्ते । समयः (vi) .............. न नाशनीयः । (vii) ............. पालनं सततं कुरु। ततः (viii) ............... अङ्कान् प्राप्स्यसि । (ix) ............... पितृभ्यां सप्रेम नमोनमः ।

भवदीयः .....................

वैभवः।

| **उत्तराणि** -(i) आशीष, (ii) विवरणपत्रम्, (iii) नियमेन, (iv) समयम्, (v) विश्रामस्य, (vi) व्यर्थकार्येषु, (vii) नियमस्य, (viii) उच्चैः, (ix) आदरणीयाभ्याम्, (x) भ्राता |
|---|

# चित्राधारितवर्णनम्

## चित्रवर्णन-1

**अधः प्रदत्तं चित्रं दृष्ट्वा मञ्जूषायां प्रदत्त शब्दानां साहाय्येन पञ्चवाक्यानि संस्कृतेन लिखत।**

(नीचे दिए गए चित्र का वर्णन मञ्जूषा में दिए गए शब्दों की सहायता से पाँच वाक्य संस्कृत में लिखिए।)

| वृक्षः, | चित्रम्, | रचयति, | उपविशति, | दोलायाम्, |
|---|---|---|---|---|

**उत्तर -**

1) इदं चित्रम् उद्यानस्य अस्ति। (यह चित्र उद्यान (बगीचे) का  है।)
2) एका बाला सुन्दरं चित्रं रचयति। (एक बालिका सुन्दर चित्र बना रही है।)
3) बालकाः पादकन्दुकेन खेलन्ति। (बालक फुटबॉल से खेल रहे हैं।)
4) वृक्षस्य अधःद्वे बालिके दोलायां दोलयतः। (पेड़ के नीचे दो बालिकाएँ झूला झूल रही हैं।)
5) उद्याने द्वौ जनौ उपविशतः। (उद्यान में दो लोग बैठे हैं।)

## चित्रवर्णन-2

**मंजूषा-**खेलन्ति, क्रीडाङ्गणे, वृक्षाः, बालाः, फुटबॉलक्रीडा, पाद्कन्दुकम् , गृहम्।

**उत्तर -**

1) एतत्क्रीडाङ्गनस्य चित्रम् अस्ति। (यह खेल के मैदान का चित्र है।)
2) बालकाः पादकन्दुकेन खेलन्ति। (बालक फुटबॉल से खेल रहे हैं।)
3) अत्र अनेकाः हरिताः वृक्षाः सन्ति। (यहाँ अनेक हरे पेड़ हैं।)
4) बालकः बालिकाश्च पितरौ सह फुटबॉलक्रीडां पश्यतः।(बालक औरबालिका माता-पिता के साथ फुटबॉल का खेल देख रहे हैं।)
5) अस्मिन् चित्रे एकं सुन्दरं गृहम् अस्ति। (इस चित्र में एक सुंदर घर है।)

## चित्रवर्णन-3

**उत्तर-**

1) इदं चित्रं कस्य चित् आपणस्य अस्ति। (यह चित्र किसी बाज़ार का है।)
2) बालकाः स्वमित्रैः सह मेलयित्वा प्रसन्नाः भवन्ति। (बालक अपने मित्रों के साथ मिलकर प्रसन्न हो रहे हैं।)
3) सर्वे जनाः सुन्दर वेशभूषां धारयन्ति। (सभी लोगों ने सुन्दर वस्त्र पहन रखे हैं।)
4) जनाः इतस्ततः धावन्ति। (लोग इधर-उधर दौड़ रहे हैं।)
5) एका महिला वस्त्रं पश्यति। (एक महिला वस्त्र देख रही है।)

## चित्रवर्णन-4

**मंजूषा-** बालः, पश्यतः, सरोवरे , वृक्षः, हरितः, पुष्पे, पादपाः, पत्राणि, पश्यन्ति।

**उत्तर -**

1) इदम् उपवनस्य चित्रम् अस्ति। (यह उपवन (बगीचे) का चित्र है।)
2) द्वौ बालौ व्यायामं कुरुतः। (दो बालक व्यायाम कर रहे हैं।)
3) सरोवरे राज हंसाः तरन्ति। (तालाब में राज हंस तैर रहे हैं।)
4) आकाशे पक्षिणः उड्डयन्ति। (आकाश में पक्षी उड़ रहे हैं।)
5) उपवने अनेकाः हरिताः वृक्षाः पत्राणि पुष्पाणि च सन्ति। (बगीचे में अनेक हरे पेड़, पत्ते और फूल हैं।)

## चित्रवर्णन-5

**मंजूषा -** शाकविक्रेता, कोलाहलः, समूहः, आकारयन्ति, कदली, आलुकम्, पलाण्डु, गृञ्जनम्, प्रयच्छन्ति, विक्रीणन्ति।

**उत्तर -**

1) इदं चित्रं शाकापणस्य अस्ति। (यह चित्र सब्जी मंडी का है।)
2) शाकविक्रेतारः शाकान्क्रेतुं जनान् आकारयन्ति। (सब्जी वाले सब्जियाँ खरीदने के लिए लोगों को बुला रहे हैं।)
3) अत्र शाकविक्रेतारः आलूकम्, पलाण्डु, गृञ्जनम्, कदलीफलम् इत्यादयः विक्रीणन्ति। (यहाँ सब्जी वाले आलू, प्याज़, गाजर, केले इत्यादि बेच रहे हैं।)
4) महिला शाक विक्रेतारम् आलूकस्य मूल्यं पृच्छति। (महिला सब्जी वाले से आलू का मूल्य पूछ रही है।)
5) एकः पुरुषः बालिकायै एकं स्यूतं यच्छति। (एक पुरुष बालिका को एक थैली दे रहा है।)

## चित्रवर्णन-6

**उत्तर -**

| **मंजूषा -**महाभारतम्, श्रीकृष्णः, अर्जुनाय, युद्धसमये, उपदेशान्, मोहात्, ददाति, कर्तव्यपालनम्, युद्धाय, सन्नद्धः। |
|---|

1) इदं महाभारतस्य कुरुक्षेत्रस्य चित्रम् अस्ति। (यह महाभारत के कुरुक्षेत्र का चित्र है।)
2) अर्जुनः युद्धसमये स्वपरिजनान् वीक्ष्य मोह ग्रस्तः अभवत्। (अर्जुन युद्ध के समय अपने परिजनों को देखकर मोहग्रस्त हो गया।)
3) अस्मिन् चित्रे श्रीकृष्णः अर्जुनाय गीतायाः उपदेशं ददाति। (इस चित्र में श्री कृष्ण अर्जुन को गीता का उपदेश दे रहे हैं।)
4) उपदेशान्प्रेरितः अर्जुनः युद्धाय सन्नद्धः अभवत्। (उपदेश से प्रेरित होकर अर्जुन युद्ध में लग गया।)
5) श्रीकृष्णः अर्जुनम् अकथयत् यत् त्वं स्व कर्तव्य पालनं कुरु। (श्री कृष्ण ने अर्जुन से कहा कि तुम अपने कर्त्तव्य का पालन करो।)

## चित्रवर्णन-7

**मंज**

| वर्धापनानि, आलिङ्गनं, धार्मिकं सौहार्दम्, उत्सवः, मानयन्ति, उपासनागृहम्। |
|---|

**उत्तर -**

1) इदं चित्रम् ईद-उत्सवस्य अस्ति। (यह चित्र ईद उत्सव का है।)
2) मुस्लिम धर्मावलम्बिनः जनाः उपासनागृहम् गच्छन्ति। (मुस्लिम धर्म को मानने वाले लोग उपासना गृह (मस्ज़िद) जा रहे हैं।)
3) सर्वे परस्परं मिलित्वा सेवई इति मिष्टान्नं खादन्ति वर्धापनानि च यच्छन्ति। (सभी आपस में मिलकर सेवई आदि मिठाई खाते हैं और बधाई देते हैं।)
4) ते सर्वे नूतनानि वस्त्राणि धारयन्ति। (वे सभी नए वस्त्र पहने हुए हैं।)
5) मुस्लिम धर्मावलम्बिनः इमम् उत्सवं धार्मिक सौहार्द्रेणमानयन्ति। (मुस्लिम धर्म को मानने वाले लोग इस उत्सव को धार्मिक सौहाद्रता से मनाते हैं।)

## चित्रवर्णन-8

| **मंजूषा-**ईसामसीहः, जन्म, दिसम्बरमासस्य, केक इत्याख्यं मिष्टान्नम्, नूतनवस्त्राणि, गिरिजागृहम्, उपासनापद्धतिः, शैत्यम्, सिक्थवर्तिका, सान्ताक्लॉज इति, उपहाराणि, वाञ्छन्ति। |
|---|

**उत्तर -**

1) इदं चित्रं क्रिसमस पर्वणस्य अस्ति। (यह चित्र क्रिसमस पर्व का है।)
2) ईसामसीहस्य जन्मः दिसम्बरमासस्य पञ्चविंशत्याम्तारिकायाम् अभवत्। (ईसामसीह का जन्म दिसम्बर महीने की पच्चीस (25) तारीख को हुआ था।)
3) सर्वेजनाः नूतनवस्त्राणि धारयित्वा गिरिजागृहं गच्छन्ति। (सभी लोग नए वस्त्र पहनकर गिरिजाघर जाते हैं।)

4) जनाः अस्मिन्दिवसे केक इत्याख्यं मिष्टान्नं खादन्ति।(लोग इस दिन केक इस नाम से प्रसिद्ध मिठाई खाते हैं।)
5) सान्ताक्लॉजः बालकेभ्यः उपहाराणि यच्छन्ति। (सान्ताक्लॉज बच्चों को उपहार देता है।)

## चित्रवर्णन-9

**मंजूषा -** चलचित्रम्, जनाः, जनसम्मर्दः, चलचित्रपटः, उत्सुकाः, चिकिटम्, खाद्यसामग्री, मध्यान्तरः, भारतम्, पश्यन्ति।

**उत्तर -**

1) एतत् चलचित्रभवनस्य चित्रम् अस्ति। (यह चलचित्र भवन का चित्र है।)
2) अत्र विशालजन समूह उत्सुकाः दृश्यते।(यहाँ विशाल जन समुदाय उत्सुक दिखाई दे रहा है।)
3) जनाः चिकिटां क्रीत्वा चलचित्रं पश्यन्ति। (लोग टिकट खरीद कर चलचित्र देखते हैं।)
4) जनाः मनोरञ्जनाय अत्र आगच्छन्ति। (लोग मनोरंजन के लिए यहाँ आते हैं।)
5) जनाः मध्यान्तरे खाद्यसामग्रीम् अपि खादन्ति। (लोग बीच में खाना भी खाते हैं।)

## चित्रवर्णन-10

**मंजूषा -**भारतद्वारम्, सैनिकाः, गणतंत्रदिवसः, पथसंचलनम्, ध्वजोत्तोलनम्, भवति, राष्ट्रियपर्व, अवकाशः, जनसम्मर्द, सैनिकाः।

**उत्तर -**

1) इदं चित्रं गणतन्त्रदिवसस्य अस्ति। (यह चित्र गणतन्त्र दिवस का है।)
2) अस्मिन् दिवसे भारतद्वारे ध्वजोत्तोलनं भवति। (इस दिन भारत द्वार पर झंडा फहराया जाता है।)
3) गणतन्त्रदिवसः भारतीयानां राष्ट्रियपर्वः अस्ति। (गणतंत्र दिवस भारतीयों का राष्ट्रीय पर्व है।)
4) अस्मिन् दिवसे संपूर्ण भारते अवकाशः भवति। (इस दिन सम्पूर्ण भारत में अवकाश होता है।)
5) भारतद्वारे सैनिकाः पथसंचालनं कुर्वन्ति। (भारत द्वार पर सैनिक पथ संचालन करते हैं।)

# अनुच्छेदलेखनम्

**1. मञ्जूषा-प्रदत्त-शब्दानां साहाय्येन पञ्चभिः संस्कृत-वाक्यैः अनुच्छेदं लिखत ।**

**मञ्जूषा-**बहवः-पशवः, गवां, कृषिकरणाय, ददाति, मानवानां कृते, उपकारकाणि, देशे, बद्धमूला, अस्ति, सन्ति

**उत्तराणि**

1) संसारेऽस्मिन् बहवः पशवः सन्ति।तेषु पशुषु गवां महत्वपूर्णं स्थानम् अस्ति।
2) गौः अस्मभ्यं दुग्धं ददाति।सा कृषिकरणाय वृषभं ददाति।
3) तस्याः गोमयेन उर्वरकं सञ्जायते।
4) गवां दुग्धं,मल-मूत्रं,चर्म,श्रृङ्गं,अस्थि च सर्वाणि एव मानवानां कृते उपकारकाणि सन्ति।
5) अस्माकं देशे 'गौः अस्माकं माता' , 'गौसेवया पुण्यो भवति', 'गोसंवर्धनम् अस्माकं धर्मः' च इति धारणा बद्धमूला अस्ति।

**2. मञ्जूषायाः पदानि चित्वा "भारतीय सेना" इत्यस्य विषयस्य उपरि संस्कृतभाषायाम् अनुच्छेदं लिखत -**

**मञ्जूषा-**कठिनं, जीवनं, सेनायाः उपरि गर्वम्, वर्तते, कठिन-परिस्थित्याम् अपि, कार्यं, करोति, हिमालयस्य, हिमाच्छादितेषु शिखरेषु, अहर्निशं सेवामहे, इति उद्घोषं सार्थकं, कुर्वन्ति।

**उत्तराणि**

1. अस्माकं सेना विशालतमा वर्तते।
2. सैनिकानां जीवनम् अतीव कठिनं भवति।
3. सैनिकाः कठिन-परिस्थित्याम् अपि कार्यं कुर्वन्ति।
4. ते अहनिर्शंसेवामहे इति उद्घोषं सार्थकं कुर्वन्ति।

5. वयं सेनायाः उपरि गर्वं कुर्मः।

**3. अस्माकं विद्यालयः" इति विषयम् अधिक.त्य संस्कृतभाषायाम् अनुच्छेदं लिखत। सहायतार्थं पदानि मञ्जूषायां दत्तानि सन्ति।**

| **मञ्जूषा-**छात्राः, विशालभवनं, योग्यम्, क्रीडाक्षेत्रे, परिश्रमेण, पठन्ति, प्रयोगशाला, पुस्तकालयः, उद्यानम्,पाठयन्ति, प्रातः, अष्टवादने, संस्कृतम्, प्रधानाचार्यः उत्सवः, अपि, च। |
|---|

**उत्तराणि**

1. अस्माकं विद्यालयः नगरस्य उत्तमः संस्कृतविद्यालयः गण्यते।
2. अस्य विशालभवनं सर्वान् आकर्षयति।
3. विद्यालये छात्राः अतीव परिश्रमेण पठन्ति।
4. अस्माकं विद्यालयः प्रातः अष्टवादने आरभ्यते।
5. विद्यालये पुस्तकालयः, प्रयोगशाला, क्रीडाक्षेत्रं चापि सन्ति।

**4. मञ्जूषां दृष्टवा पर्वतारोहणम् इत्यस्य विषयस्य उपरि संस्कृतभाषायाम् अनुच्छेदं लिखत।**

| **मञ्जूषा-(**"पर्वतारोहणं", रोमांचकारी, आनन्दप्रदं, सृष्टे, महान् उपकारः, साहसी, जनः, भयकारि, हिमाच्छादितानि, शिखराणि, अत्युच्चतमानि, अनेके, जनाः, आनन्दम् अनुभवन्ति। |
|---|

**उत्तराणि**

1. पर्वतारोहणं रोमांचकारि भवति।
2. पर्वताः सृष्टेः महान्तः उपहाराः भवन्ति।
3. साहसीजनः एव भयकारीणि हिमाच्छादितानि शिखराणि आरोहणं करोति।
4. पर्वतारोहणं कृत्वाजनाः अपूर्वम् आन्नदम् अनुभवन्ति।
5. पर्वतस्य शिखराणि अत्युच्चतमानि भवन्ति।

**5. मञ्जूषायाः पदानि चित्वा "पितृसेवा" इत्यस्मिन् विषये सरलसंस्कृते अनुच्छेदं लिखत**

| **मञ्जूषा -** पितृचरणेषु, स्वर्गः, भवति, शास्त्रेषु, साक्षात् ईश्वरः कथितः, तस्य, सेवा, आनन्द-सुख-युक्ता भवति, मातृमान्, पितृमान्, मातृदेवोभव, पितृदेवोभव। |
|---|

**उत्तराणि**

1. पितृसेवा बालानां परमो धर्मः मन्यते।
2. पितृचरणेषु एव स्वर्गः भवति।
3. पितरःसाक्षात् ईश्वर एव मन्यन्ते।
4. बालः मातृमान्पितृमान्च भवेत्।
5. तेन सदैव मातृदेवोभव पितृदेवोभव इति शिक्षा ज्ञातव्या।

**अभ्यास हेतु प्रश्नाः :-**

**1. मञ्जूषायाः पदानिचित्वा "वृक्षा: अस्माकं मित्राणि" इत्यस्मिन् विषये सरलसंस्कृते अनुच्छेदं लिखत**

**जूषा-**(वृक्षाः, सत्पुरुषाः, परोपकारम्, छाया,फलानि,पुष्पाणि,जनाः,पवनः, काष्ठम्,शीतलः, स्वास्थ्याय, श्यकम्, पथिकः,आनन्दम्, अनुभवन्ति, भूमेः संरक्षणम्, वर्षा, पक्षिभ्यः वासः)

**2. मञ्जूषायाः पदानि चित्वा "मम प्रियं पुस्तकम्" इत्यस्मिन् विषये सरलसंस्कृते अनुच्छेदं लिखत**

**मञ्जूषा-**( मम, पठने, महती, ज्ञानस्य, साधनम्, भगवद्गीता, पुस्तकं, प्रियं, रुचिः, गीतायाम्, भण्डारः, कर्मयोगः, भक्तियोगः, अर्जुनं प्रति, उपदेशः)

**3. मञ्जूषायाः पदानि चित्वा "क्रीडा-महत्वम्" इत्यस्मिन् विषये सरलसंस्कृते अनुच्छेदं लिखत**

**मञ्जूषा-**(महत्वपूर्णम्, सर्वेभ्यः, अनिवार्यम्, स्वास्थ्याय, जीवनम्, संयमः, स्थानम्, सफलाः, जनाः, क्रीडा)

**4. मञ्जूषायाः पदानि चित्वा "मम संस्कृत-शिक्षकः" इत्यस्मिन् विषये सरलसंस्कृते अनुच्छेदं लिखत**

**मञ्जूषा -**व्यक्तित्वम्, अनुशासनप्रियः, आकर्षकं, संस्कृतशिक्षकः, प्रथमं श्लोकवाचनम्, विनोदप्रियः, सम्भाषणचतुरः, मधुरस्वरः, आदर्शः, प्रार्थनासभायाम्, सौम्यवेशं, परिश्रमी, राष्ट्रिय-पुरस्कार-विजेता)

**5. मञ्जूषायाः पदानि चित्वा "वसन्त-ऋतुः" इत्यस्मिन्विषये सरलसंस्कृते अनुच्छेदं लिखत**

**मञ्जूषा -**(समीरः, ऋतुराजः, षट्पदाः, कोकिलाः, पुष्पाणि, आम्रवृक्षाः, हर्षिताः, मधुमासः, जनाः, सरस्वती-पूजा, रमणीया, प्रकृतिः, मन्दः)

## कथापूर्तिः

**1. अधोलिखिताम् कथां मञ्जूषायाः सहायतया पूरयित्वा पुनः लिखत -**

एकस्मिन् वने एकः विशालः ................................ आसीत्| तस्मिन् बहवः खगाः वसन्ति स्म | एकदा ते अतीव .................................. आसन् | अतः भोजनं ............................ इतस्ततः भ्रमन्ति स्म | ते दूरं दूरं गच्छन्ति स्म | अन्ते च एकस्मिन् क्षेत्रे ........................ अपश्यन्| ते तत्र गत्वा प्रसन्नतया तंडुलान् खादन्ति स्म | परन्तु .......................... बद्धाः अभवन्| अधुनाकिम् ........................... इति चिन्तयित्वा ते सर्वे जालेन सह एव एकं ........................... उपागच्छन् | तेषां मित्रं एकं ........................... आसीत्| सः जालं ............................ अकर्तयत् |अन्ते सर्वे स्वतंत्राः भूत्वा अनृत्यन् अगायन् च - सुखं तु .............................. एव विद्यते |

**<u>मञ्जूषा</u> -**जालेन, करणीयं, दंतैः, वृक्षः, खादितुम्, एकतायाम्, स्वमित्रं, तंडुलान्, मूषकः, बुभुक्षिताः |

**उत्तरम्-**

एकस्मिन् वने एकः विशालः.... **वृक्षः**.... आसीत्| तस्मिन् बहवः खगाः वसन्ति स्म | एकदा ते अतीव ...... **बुभुक्षिता**:...... आसन् | अतः भोजनं ... **खादितुम्**....
इतस्ततः भ्रमन्ति स्म | ते दूरं दूरं गच्छन्ति स्म | अन्ते च एकस्मिन् क्षेत्रे .... **तंडुलान्**....
अपश्यन्| ते तत्र गत्वा प्रसन्नतया तंडुलान् खादन्ति स्म | परन्तु ..... **जालेन**.... बद्धाः अभवन्| अधुनाकिम् .....**करणीयं**..... इति चिन्तयित्वा ते सर्वे जालेन सह एव एकं ..... **स्वमित्रं**........ उपागच्छन् | तेषां मित्रं एकं ..... **मूषक**:..... आसीत्| सः जालं ...... **दंतैः**.... अकर्तयत् |अन्ते सर्वे स्वतंत्राः भूत्वा अनृत्यन् अगायन् च - सुखं तु .... **एकतायाम्**...... एव विद्यते |

**अभ्यास:**

1. **अधोलिखिताम् कथांमञ्जूषायाः सहायतयापूरयित्वा पुनः लिखत -**

| **मञ्जूषा -**गानं, पादयोः, पलायनं, शृगालः, खादन्तं, वचनं, पूर्वजम् काकस्य, मासखण्डं, मधुरः, । |
|---|

कश्चन् काकः आसीत्। सः एकस्मिन् दिने किञ्चित् ......................... गृहीत्वा वृक्षस्य शाखायाम् उपविष्टः आसीत्। तदा कश्चित् ...............................तत्र आगतः। सः मासं..........................काकं दृष्ट्वा उक्तवान् - भोः मित्रः! खगेषु भवान् एव अतीव सुन्दरः। भवतः वर्णः तु अत्याकर्षकः। भवतः स्वरः अपि अतीव .............................., भवान् अत्यन्तं सुन्दरं गायति। भवतः .............................श्रोतुम् मम मनः उत्सहते कृपया एकं गीतं गायतु इति। श्रृगालस्य .......................... श्रुत्वा काकः झटिति मांसखण्डं ......................... अधः स्थापयित्वा श्रृगालम् उक्तवान् -'भोः चतुर शृगाल! भवान् मम ........................... मूर्ख कृत्वा मांसखण्डं प्राप्तवान् आसीत्। अतः माम् अपि मूर्ख मन्यमानः भवान् तथा पृच्छन् अस्ति। किं काकः अपि सुन्दरं गातुं शक्नुयात्' इति ।........................... वचनं श्रुत्वा शृगालः ततः .......................... कृतवान्।

| **उत्तरम् -** मासखण्डं, शृगालः, खादन्तं, , मधुरः, गानं, वचनं, पादयोः, ,पूर्वजम् , काकस्य, पलायनं । |
|---|

2. **अधोलिखिताम् कथांमञ्जूषायाः सहायतयापूरयित्वा पुनः लिखत -**

| **मञ्जूषा -**[त्यागवृत्तिम्, दानाशालाः, विषण्णाः, सत्यपुण्यबलेन, जनाः, याचकाय, शिवीनां, नेत्रहीन, याचकस्य] |
|---|

एकदा बोधिसत्त्वः बहुजन्मार्जितपुण्यफलैः ............................. राजा बभूव। सः नगरस्य समन्ततः धनधान्यसमृद्धाः ............................अकारयत्। राज्ञः दानशीलताम् आकर्ण्य देशान्तरेभ्योऽपि ...........................तम् देशम् आयान्तिस्म। तस्यदानशीलताम् परीक्षितुम् शक्रः .............................. रूपं धारयित्वा आगच्छत्।राज्ञ: नेत्रदानार्थं निश्चयंज्ञात्वा मन्त्रिणः .......................... अभवन्। राजा

वैद्योक्तविधिना स्वचक्षुः..............................समर्पितवान्। देवराजः शक्रः तस्य............................प्राशंसत्। शक्रस्य प्रभावेण आत्मनः .........................................च राजा पुनः द्रष्टुम् समर्थः अभवत्।

**उत्तरम् -** शिवीनां, दानाशालाः, जनाः, नेत्रहीनयाचकस्य, विषण्णाः, याचकाय, त्यागवृत्तिम्,सत्यपुण्यबलेन]

**3. अधोलिखिताम् कथांमञ्जूषायाः सहायतया पूरयित्वा पुनः लिखत -**

**<u>मञ्जूषा</u> -**प्रकाशनस्य, अग्रे, फलानि, कृतघ्नतां, विवशतायाः, स्थित्वा, वार्तालापं, शब्दं, पथिकः, फलोत्पादनम्।

एकस्मिन् उपवने स्थिताः आम्रवृक्षाः परस्परं ..................................................कुर्वन्तः वदन्ति यत् मनुष्याः तेषां पकवानि। ................................................ त्रोटयित्वा नयन्ति परन्तु कृतज्ञतायाः एकं अपि ............................................. तान् प्रति नैव कथयन्ति । अहो! तेषाम् इमां ..................................धिक् धिक्।'वृक्षाणाम् समीपम् निःसरन्' कश्चित् ........................................... तेषां इमां वार्ता श्रुतवान् किञ्चित्। तत्र ........................................................... च तान् अब्रवीत्- 'अस्मिन् भवदभ्यः कृतज्ञतायाः ...............................................का वार्ता? भवतां स्वभावः ..............................................  न तद् भवद्भिः क्रियत्, करिष्यते अपि च एव। इयं भवदीया विवशता। पुनः ..................................... लाभ कः न गृह्माति?' इति कथयित्वा सः ............................................... प्रस्थितः इति।

**उत्तरम् -**वार्तालापं, फलानि, शब्दं, कृतघ्नतां, पथिकः, स्थित्वा, विवशतायाः, फलोत्पादनम्, प्रकाशनस्य, अग्रे

**4. अधोलिखिताम् कथांमञ्जूषायाः सहायतयापूरयित्वा पुनः लिखत -**

**मञ्जूषा -**साधुवृत्तिं, पत्नीम्, दुष्टबुद्धिः, परिश्रमेण, मारयितुम्, प्रभूतम्, धनहरणार्थम्, कुमार्गम्

एकः प्रच्छन्नभाग्यः आसीत्........................................... च तस्य मित्रम् । तौ ........................................... धनिकस्य गृहम् अगच्छताम्। मार्गे एकः बालः तौ अकथयत् यत् भवन्तौ..................................................किमर्थं न त्यजतः।गृहमागत्य प्रच्छन्नभाग्यः सम्पूर्णा वार्ता .............................................. अकथयत्। पत्नी अकथयत्- अलं चिन्तया। अधुना ........................................ धनं प्राप्तव्यम्। सः परिश्रमेण ....................................... धनं प्राप्तवान्। एकस्मिन् दिवसे दुष्टबुद्धिः मित्रं प्रच्छन्नभाग्यं.................................................... सर्पम् अत्यजत्। सर्पः दुष्टबुद्धिम् एव दष्टवान्। अतः कथ्यते...........................................समाचरेत्।

**उत्तरम् -**[दुष्टबुद्धिः, धनहरणार्थम्, कुमार्गम् , पत्नीम्, परिश्रमेण, प्रभूतम्, मारयितुम्, साधुवृत्तिं

5. **अधोलिखिताम् कथांमञ्जूषायाः सहायतयापूरयित्वा पुनः लिखत -**

| **मञ्जूषा -** भक्षयति, वानरयूथपतिः, कपीन्, राजगृहे, प्रतिवसतिस्म, कलहः, मेषाणां |
|---|

कस्मिंश्चित् नगरे चन्द्रो नाम भूपतिः ................................। तस्य पुत्राः वानरक्रीडारताः वानरयूथं नित्यमेव विविधैः भोज्यपदार्थैः पुष्टिं नयन्ति स्म। तस्मिन् ............................ बालवाहनयोग्यं मेषयूथम् आसीत्। तेषां ................................ मध्ये एको मेषः जिह्वालोलुपतया अहर्निशं महानसं प्रविश्य यत् पश्यति तद् ............................... ।ते च सूपकाराः यत्किञ्चित् काष्ठं, मृण्मयं भाजनं कांस्यताम्रपात्रं वा पश्यन्ति तेन तम् आशु ताडयन्ति स्म।मेषस्य सूपकाराणां च कलहम् अवेक्ष्य नीतिविदाम् अग्रणीः................................... अचिन्तयत्- 'एतेषां कलहो न वानराणां हिताय ।' एवं विचार्य स यूथपः सर्वान् ...........................आहूय रहसि अवदत् - "सूपकारणां मेषेण सह एषः............................... नूनं भवतां विनाशकारणं भविष्यति।"

| **उत्तरम् -** प्रतिवसतिस्म , राजगृहे , मेषाणां, भक्षयति, वानरयूथपतिः, कपीन्, कलहः |
|---|

6. **अधोलिखिताम् कथांमञ्जूषायाः सहायतयापूरयित्वा पुनः लिखत -**

| **मञ्जूषा -**दुष्टबुद्धि, नाम्ना, प्रच्छन्न, भाग्यधन, हरणार्थं, सुपथं, अनुभवेत्, मार्गे, उवाच, बाल्ये |
|---|

अस्ति कर्मपुरनाम्नि नगरे.......................... -नामधेयः कश्चित् कुमारः।.................................... वयसि विद्यापराङ्मुखः स केनचित् ..................................... चौरेण सह चौर्यकर्मणि निरतः सञ्जातः। एकदा सः दुष्टबुद्धिना सार्थ कस्यचित् श्रेष्ठिनः गेहे ............................. ग्रामान्तरं प्रस्थितः । अथ व्रजन्तौ तौ गर्तसङ्कुले ................................... क्रीडतः कांश्चित् बालकान् प्रेक्ष्य अवदताम्-भो भो बालकाः! कथमत्र नतोन्नते विषमे मार्गे क्रीडथ? यदि कश्चिद् गर्ने पतेत् तर्हि स विकलाङ्गो भूत्वा चिरं क्लेशम् ..................................... । तच्छ्रुत्वा तेषु कश्चित् उद्दण्डः बालकः.............................. -अयि भो ! यद्येवं तर्हि कथं भवन्तौ .............................परित्यज्य अनेन कुपथेन गन्तुं प्रवृत्तौ? अपि इदम् श्रेयस्करम् ?

| **उत्तरम् -** प्रच्छन्नभाग्य , बाल्ये , दुष्टबुद्धिनाम्ना, धनहरणार्थं, मार्गे, अनुभवेत्, उवाच, सुपथं |
|---|

7. **अधोलिखिताम् कथांमञ्जूषायाः सहायतयापूरयित्वा पुनः लिखत -**

| **मञ्जूषा -** विहरतौ तिरस्कृतः, महत्त्वं, , कोकिलात्, सत्यप्रियः आत्मप्रशंसा, काकस्य, निन्दां |
|---|

एकदा सरस्तीरे..................................... राजहंसौ काकस्य ध्वनिं श्रुत्वा तं वाचालं कथयतः। निन्दितः काकः प्रविश्य कथयति यत् अहं तु ..................................अस्मि । ......................................... पश्चात् राजहंसौ बकस्य ....................................... कुरुतः। स्वनिन्दां श्रुत्वा बकः तत्रागत्य मयूरं तिरस्करोति|.............................. मयूरः आगत्य स्वकेका रवं ................................ श्रेष्ठतरं कथयति। कोकिलः आगत्य .............................. कुर्वन्तं

मयूरं तिरस्कृत्य स्वप्रशंसाम् करोति। पक्षिणां कलहं दृष्ट्वा प्रकृतिः माता तत्रागच्छति प्रकृतिः माता कथयति-सर्वेषां यथासमयं ................................. विद्यते।

| **उत्तरम् -** विहरतौ, सत्यप्रियः, काकस्य, निन्दां , तिरस्कृतः, कोकिलात्, आत्मप्रशंसा, महत्त्वं, |
|---|

**8. अधोलिखिताम् कथां मञ्जूषायाः सहायतया पूरयित्वा पुनः लिखत -**

| **मञ्जूषा -** स्वागतं, दलः, स्वागताय, छात्रान्, प्रश्नोत्तरमाध्यमेन, द्रष्टुम् |
|---|

छात्राणाम् एकः ...................................... तत्र प्रविशति । तेषाम् ..............................बालसमूहः मधुरस्वेरण गायति। प्रधानाचार्यः छात्राणाम्.................................... करोति। पर्यटनाधिकारी ध्वनि विस्तारक यन्त्रस्य समीपं गत्वा ...................................... सम्बोधयति । पर्यटनाधिकारी ......................................... अरुणाचलस्य स्थलानाम् परिचयं ददाति । हिमांशुः मिथुनं इति विषये पृच्छति। पर्यटनाधिकारी प्रक्षेपक यन्त्रेण परिचयं करोति। जलपानाद् अनन्तरं सर्वे स्थलानि ............................................ गच्छन्ति।

| **उत्तरम् -**दलः, स्वागताय, स्वागतं, छात्रान्, प्रश्नोत्तरमाध्यमेन, द्रष्टुम् |
|---|

# संवाद लेखनम्

**1. मञ्जूषात: उपयुक्तपदानि गृहीत्वा अध्ययनविषये पितापुत्रयोः संवादं पूरयतु**

| **मञ्जूषा-** अध्यापकः, विषये, गणिते, व्यवस्था, स्थानान्तरणम्, अध्ययनं, समीचीनं, काठिन्यम्। |
|---|

पिता - रमेश ! तव ................कथं प्रचलति ?
रमेशः - हे पितः! अध्ययनं तु................प्रचलति ।।
पिता - कोऽपि विषयः एतादृशः अस्ति यस्मिन् त्वं ................अनुभवसि ?
रमेशः - आम्! .............मम स्थितिः सम्यक् नास्ति । यतोहि अस्माकं विद्यालये इदानीं गणितस्य ........ नास्ति।
पिता - त्वं पूर्वं तु माम् अस्मिन्................न उक्तवान् !
रमेशः - पूर्वं तु अध्यापक-महोदयः आसीत् परं एकमासात् पूर्वमेव तस्य..............अन्यत्र अभवत् ।
पिता - अस्तु । अहं तव कृते गृहे एव गणिताध्यापकस्य ................करिष्यामि।
रमेशः - धन्यवादाः।

**उदाहरणार्थ-समाधानमः -**

पिता - रमेश! तव अध्ययनं कथं प्रचलति ? (रमेश! तेरा अध्ययन (पढ़ाई) कैसा चल रहा है ?)
रमेशः - हे पितः। अध्ययनं तु समीचीनं प्रचलति। (पिताजी ! अध्ययन तो ठीक चल रहा है ।)

पिता - कोऽपि विषयः एतादृशः अस्ति यस्मिन् त्वं काठिन्यम् अनुभवसि ?
(कोई भी विषय ऐसा है, जिसमें तुम्हें कठिनाई अनुभव हो रही हो?)

रमेशः - आम्! गणिते मम स्थितिः सम्यक् नास्ति। यतोहि अस्माकं विद्यालये इदानीं गणितस्य अध्यापकः नास्ति।
(हाँ! गणित में मेरी स्थिति ठीक नहीं है। क्योंकि हमारे विद्यालय में इस समय गणित का अध्यापक नहीं है।)

पिता - त्वं पूर्वं तु माम् अस्मिन विषये न उक्तवान् !
(तुमने पहले तो मुझसे इस विषय के बारे में नहीं कही ।)

रमेशः - पूर्वं तु अध्यापक-महोदयः आसीत् परं एकमासात् पूर्वमेव तस्य स्थानान्तरणम् अन्यत्र अभवत् ।
(पहले तो अध्यापक महोदय थे, लेकिन एक महीने पूर्व ही उनका स्थानान्तरण दूसरी जगह हो गया ।)

पिता - अस्तु । अहं तव कृते गृहे एव गणिताध्यापकस्य व्यवस्था करिष्यामि।।
(हो! मैं तुम्हारे लिए घर पर ही गणित अध्यापक की व्यवस्था करूंगा।)

रमेशः - धन्यवादाः। ( धन्यवाद ।)

2. **मञ्जूषायां प्रदत्तपदैः 'जयपुरभ्रमणम्' इति विषये मित्रयोः परस्परं वार्तालापं पूरयतु।**

| **मञ्जूषा-** मित्रैः, जयपुरं, कार्यक्रमः, दर्शनीयम्, यात्रानुभवविषये, द्रक्ष्यामः |
|---|

विनोदः - अंकित ! श्वः भवान् कुत्र गमिष्यति ?

अंकितः - अहं ................गमिष्यामि ।

विनोदः - तत्र किमपि कार्यं वर्तते ? अथवा .............. एव गच्छति ?

अंकितः - कार्यं नास्ति, अहं तु ................ सह भ्रमणार्थं गच्छामि।

विनोदः - जयपुरे कुत्र-कुत्र भ्रमणस्य ................ अस्ति?

अंकितः - वयं तत्र आमेर-दुर्गं, जयगढ़दुर्ग, गोविन्ददेव-मन्दिरं च ..... ।

विनोदः - तत्र नाहरगढ़-दुर्गमपि पश्यतु । तदपि ............... अस्ति ।

अंकितः - यदि समयः.अवशिष्टः भविष्यति तर्हि निश्चयेन तत्र गमिष्यामः ।

विनोदः - बाढ़ मित्र ! नमस्ते! इदानीम् अहं गच्छामि। सोमवासरे आवां पुन: मिलिष्याव:। तदा ......... वार्तालापं करिष्यावः।

**<u>उत्तरम् -</u>**

विनोदः - अंकित ! श्वः भवान् कुत्र गमिष्यति? (अंकित कल आप कहाँ जाओगे?)

अंकितः - अहं जयपुरं गमिष्यामि। (मैं जयपुर जाऊँगा।)

विनोदः - तत्र किमपि कार्यं वर्तते ? अथवा भ्रमणार्थम् एव गच्छति ?

(वहाँ कोई भी कार्य है अथवा घूमने के लिए ही जाना है।)

अंकितः - कार्यं नास्ति, अहं तु मित्रैः सह भ्रमणार्थं गच्छामि।

(कार्य नहीं है, मैं तो मित्रों के साथ घूमने के लिए जाता हूँ ।)

विनोदः - जयपुरे कुत्र-कुत्र भ्रमणस्य कार्यक्रमः अस्ति?

(जयपुर में कहाँ-कहाँ घूमने का कार्यक्रम है?)

अंकित: - वयं तत्र आमेर-दुर्गं, जयगढ़दुर्गं, गोविन्ददेव-मन्दिरं च दक्ष्यामः ।

(हम सब वहाँ आमेर किला, जयगढ़ किला और गोविन्द मन्दिर देखेंगे।)

विनोदः - तत्र नाहरगढ़-दुर्गमपि पश्यतु । तदपि दर्शनीयम् अस्ति।

(वहाँ नाहरगढ़ किला भी देखो, वह भी देखने योग्य है।)

अंकितः - यदि समय: अवशिष्टः भविष्यति तर्हि निश्चयेन तत्र गमिष्यामः।

(यदि समय शेष रहेगा तो निश्चित रूप से वहाँ जायेंगे।)

विनोदः - बाढ़ मित्र ! नमस्ते! इदानीम् अहं गच्छामि। सोमवासरे आवां पुन: मिलिष्यावः। तदा यात्रानुभवविषये वार्तालापं करिष्याव:। (ठीक ! मित्र नमस्ते। इस समय मैं जाता हूँ । सोमवार को हम दोनों फिर मिलेंगे। तब यात्रा विषय के बारे में बातचीत करेंगे।)

**3. मञ्जूषायाः उपयुक्तपदानि गृहीत्वा गुरुशिष्ययोः मध्ये क्रीडायाः विषये संवादं पूरयत।**

| **मञ्जूषा-** अध्ययनम्, क्रीडने बहुलाभम्, आवश्यकता, अधुना, करोषि, क्रीडाङ्गणे, क्रीडायै |
|---|

अध्यापकः - प्रवीण ! त्वम् अत्र किं ............. ?

प्रवीणः - हे गुरो ! अहम् ............. किमपि न करोमि।

अध्यापकः - तर्हि गच्छ। तव मित्राणि तत्र ............. क्रीडन्तिं, तैः सह क्रीड।

प्रवीणः - मम............. रुचिः नास्ति । अतः अहं न क्रीडामि ।

अध्यापकः - स्वस्थशरीरस्य स्वस्थमनसः च कृते क्रीडायाः अस्माकं जीवने महती.............भवति ।

प्रवीणः - यदि अहं क्रीडायां ध्यानं दास्यामि तर्हि मम ............. बाधितं भविष्यति।

अध्यापकः - एतद् समीचीनं नास्ति। क्रीडायै स्वल्पसमयम् एव प्रयच्छ। अल्पसमयः अपि प्रवीण शरीराय............प्रदास्यति ।

प्रवीणः - बाढ़म् श्रीमन् ! इतः आरभ्य अहं कञ्चित् समयं ............ अपि दास्यामि।

<u>**उत्तरम्:**</u>

अध्यापकः - प्रवीण! त्वम् अत्र किं करोषि ? (! तुम यहाँ क्या कर रहे हो ?)

प्रवीणः - हे गुरो ! अहम् अधुना किमपि न करोमि। (हे गुरु ! मैं अब कुछ भी नहीं कर रहा हूँ।)

अध्यापकः - तर्हि गच्छ। तव मित्राणि तत्र क्रीडाङ्गणे क्रीडन्ति, तैः सह क्रीड।

(तो जाओ! तुम्हारे मित्र वहाँ खेल के मैदान में खेल रहे हैं। उनके साथ खेलो।)

प्रवीणः - मम क्रीडते रुचिः नास्ति। अतः अहं न क्रीडामि।

(मेरी खेलने में रुचि नहीं है। इसलिए मैं नहीं खेलता हूँ।)

अध्यापकः - स्वस्थशरीरस्य स्वस्थमनसः च कृते क्रीडायाः अस्माकं जीवनं महती आवश्यकता भवति ।

(स्वस्थ शरीर का स्वस्थ मन और खेल को हमारे जीवन के लिए बहुत महत्व है।)

प्रवीणः - यदि अहं क्रीडायां ध्यानं दास्यामि तर्हि मम अध्ययनं बाधितं भविष्यति ।

(यदि मैं खेल में ध्यान देंगा, तो मेरी पढ़ाई (अध्ययन) में बाधा होगी।)

अध्यापकः - एतद् समीचीनं नास्ति। क्रीडायै स्वल्पसमयम् एव प्रयच्छ। अल्पसमयः अपि शरीरस्य बहुलाभम् प्रदास्यति ।

(यह ठीक नहीं है। खेलने के लिए थोड़ा समय ही दो। थोड़ा समय भी शरीर को बहुत लाभ देगा।)

प्रवीणः - बाढ़म् श्रीमान् ! इतः आरभ्य अहं कञ्चित् समयं क्रीडायै अपि दास्यामि।

(श्रीमान् जी ठीक है! अब प्रारम्भ करके मैं कुछ समय खेलने के लिए भी दूंगा।)

**4. मञ्जूषायां प्रदत्तशब्दानां सहायतया मातापुत्रयोः मध्ये वार्तालापं पूरयतु।**

| **मञ्जूषा-** वस्तूनि, आपणं, सायंकाले, विद्यालयस्य, मातुलः, भोजनं, त्वं |
|---|

माता - राघव! ...............किं करोषि ?

राघवः - अहं मम .............. गृहकार्यं करोमि।

माता - पुत्र! गृहकार्यानन्तरम् ............... गत्वा ततः दुग्धं शाकफलानि च आनय।

राघवः - अहं ............... पुस्तकं क्रेतुम् आपणं गमिष्यामि तदा दुग्धं शाकफलानि च आनेष्यामि।

माता - सायंकाले न, त्वं तु पूर्वमेव गत्वा आनय। राघवः - शीघ्रं किमर्थम् ?

माता - अद्य तव .............. आगमिष्यति, अतः ................. समयात् पूर्वमेव पक्ष्यामि ।

राघवः - मातुलः आगमिष्यति चेत् अहम् इदानीम् एव गत्वा .............. क्रीत्वा आगच्छामि।

**<u>उत्तरम्:</u>**

माता - राघव! त्वं किं करोषि? (राघव! तुम क्या कर रहे हो ?)

राघवः - अहं मम विद्यालयस्य गृहकार्यं करोमि। (मैं अपने विद्यालय का गृहकार्य कर रहा हूँ।)

माता - पुत्र! गृहकार्यानन्तरम् आपणं गत्वा ततः दुग्धं शाकफलानि च आनय।

(पुत्र! गृहकार्य के बाद बाजार जाकर वहाँ से दूध, सब्जी और फल ले आओ।)

राघवः - अहं सायंकाले पुस्तकं क्रेतुम् आपणं गमिष्यामि तदा दुग्धं शाकफलानि च आनेष्यामि।

(मैं सायं के समय पुस्तक खरीदने बाजार जाऊँगा, तब दूध, सब्जी और फल ले आऊँगा।)

माता - सायंकाले न, त्वं तु पूर्वमेव गत्वा आनय। (सायं के समय नहीं, तुम तो पहले ही जाकर लाओ।)

राघवः - शीघ्रं किमर्थम्? (जल्दी किसलिए?) ।

माता - अद्य तव मातुलः आगमिष्यति, अतः भोजनं समयात् पूर्वमेव पक्ष्यामि।

(आज तुम्हारे मामा आयेंगे, इसलिए खाना समय से पहले पकाऊँगी।)

राघवः - मातुल: आगमिष्यति चेत् अहम् इदानीम् एव गत्वा वस्तूनि क्रीत्वा आगच्छामि।

(मामाजी आयेंगे ठीक, मैं इस समय ही जाकरे वस्तुएँ खरीदकर आता हूँ ।)

5. **मञ्जूषातः उचितानि पदानि चित्वा अधोलिखितं संवादं पूरयत ।**

| **मञ्जूषा-** गातुम्, इच्छन्ति, वयं, महोदये, परन्तु, यदि, शोभनम्, आवश्यकता । |
|---|

अध्यापिका - बालाः ! किं भवन्तः किञ्चित् प्रष्टुम् (i) ................. ?

बोलाः - महोदये ! (ii) ........... तु गातुम् इच्छामः ।

अध्यापिका - गातुम् इच्छन्ति ! (iii) ............ अहं तु (iv) ............ न समर्था ।

बालाः - (v) ........... ! वयं गास्यामः समूहगानम् । (vi) ........... भवती अपि ।

अध्यापिका - (vii) ............ ! अहम् अपि गास्यामि । गीतं किम् अस्ति ? किं वाद्ययन्त्राणाम् अपि (viii) .......... अस्ति ।

बालाः - वाद्ययन्त्राणि यदि सन्ति, शोभनम् । अन्यथा एतानि विना एव गास्याम: । गीतं तु 'पोङ्गल' इति उत्सवेन सम्बद्धम् अस्ति ।

अध्यापिका - एवं ! तदा गायामः ।

बालाः - (सस्वरं गायन्ति)

<u>**उत्तरम्:**</u>

अध्यापिका - बालाः ! किं भवन्तः किञ्चित् प्रष्टुम् इच्छन्ति ? (बच्चो ! क्या आप कुछ पूछना चाहती हैं ?)

बालाः - महोदये ! वयं तु गातुम् इच्छामः । (महोदया ! हम तो गाना चाहती हैं ।)

अध्यापिका - गातुम् इच्छन्ति ! परन्तु अहं तु गातुम् न समर्था। (गाना चाहती हैं ! लेकिन मैं तो गाने में समर्थ नहीं हूँ ।)

बालाः - महोदये ! वयं गास्यामः समूहगीनम् । यदि भवती अपि।

(महोदया ! हम गायेंगे समूहगान । यदि आप भी ।)

अध्यापिका - शोभनम् ! अहम् अपि गास्यामि । गीतं किम् अस्ति ? किं वाद्ययन्त्राणाम् अपि आवश्यकता अस्ति ?

(अच्छा ! मैं भी गाऊँगी । गीत क्या है ? क्या वाद्य यन्त्रों की भी आवश्यकता है ?)

बालाः - वाद्ययन्त्राणि यदि सन्ति, शोभनम् । अन्यथा एतानि विना एव गास्यामः । गीतं तु 'पोङ्गलः' इति उत्सवेन सम्बद्धम् अस्ति । (वाद्ययन्त्र (बाजे) यदि हैं तो अच्छा है । अन्यथा इनके बिना ही गायेंगे (सही) । गीत तो 'पोंगल' उत्सव से सम्बद्ध है ।)

अध्यापिका - एवम् ! तदा गायामः । (यह बात है ! तो गाते हैं ।)

बालाः - (सस्वरं गायन्ति) (सस्वर गाते हैं ।)

**6. मञ्जूषातः उचितानि पदानि चित्वा अधोलिखितं संवादं पूरयत ।**

**मञ्जूषा-** अवश्यमेव, आचारः, पाठशालाम्, एका, पञ्चदश, स्नेहशीलः, तव, अध्येतुम्, पाठशालायाम्, गच्छसि ।

कृष्णः - त्वं कुत्र (i) ............... ?
राधा - अहम् (ii) ............... गच्छामि ।
कृष्णः - (iii) ............. पाठशालायां कति शिक्षकाः ?
राधा - मम पाठशालायाम् (iv) ............... शिक्षकाः ।
कृष्णः - तव (v) ............... शिक्षिका न अस्ति ?
राधा - (vi) ................ शिक्षिका अस्ति ।
कृष्णः - शिक्षकाणां (vii) .................. कीदृशः अस्ति ?
राधा - (viii) ................ ।

**7. मञ्जूषातः उचितानि पदानि चित्वा अधोलिखितं सख्योः संवादं पूरयत ।**

**मञ्जूषा-** वार्ता, भोजनं, चिकित्सकः, ईच्छामि, सेवार्थं, गृहे, चिकित्सालये, व्याकुला, श्रोष्यति, तत्र ।

रमा - प्रिय सखि लते ! किमर्थं (i) ............. असि ?
लता - मम पिता अतीव रुग्णः । राजकीय (ii) ................ प्रवेशितः ।
रमा - एवम् ! ? किं तव माता (iii) ................ नास्ति?
लता - मम माता अपि (iv) ................ चिकित्सालयं गता ।
रमा - तर्हि त्वं मया सह चल । मम गृहे (v) ................ कुरु ।
लता - भोजनं न (vi) ................।
रमा - शृणु मम पिता अपि तस्मिन्नेव चिकित्सालये (vii) ................ अस्ति ।
लता - अहं चिकित्सालये तेन सह (viii) ................ करिष्यामि ।।

**8. मञ्जूषातः उचितानि पदानि चित्वा अधोलिखितं 'नागरिकनाविकयोः संवादं पूरयत ।**

**मञ्जूषा-** तारकानि, नौका, नक्षत्र-विद्याम्, त्रिचतुर्थांशः, चतुर्थांशः, गणना, जीवनस्य, उदरं, सम्पूर्णमेव, तरणम् ।

नागरिकः - भो: नाविक ! (i) ............... जानासि ?
नाविकः - नहि नहि अहं तु प्रतिदिनं (ii) ................ दृष्ट्वा नमामि ।
नागरिकः - (हसन्) भो मूर्ख ! तव जीवनस्य (iii) ............. नष्ट: । गणितं पठितवान् किम्?
नाविकः - (iv) .............. जानामि न तु गणितम् ।

नागरिकः - अरे तव (v) ............... अर्धं व्यर्थः गतः । वृक्षविज्ञानं जानासि ?

नाविकः - न जानामि । कथमपि (vi) ............... चालयामि (vii) ............... च पालयामि ।

नागरिकः - हा हन्त ! तव जीवनस्य (viii) .............. व्यर्थः गतः ।

नाविकः - श्रीमान् वायु प्रकोपः उत्पन्नः । अहं तु कुर्दित्वा तरामि । किं त्वं तरणं जानासि?

**9. निम्नलिखितं संवादं मञ्जूषा प्रदत्तपद सहायतया पूरयित्वा पुनः लिखत**

**मञ्जूषा-** अस्माभिः, नावगच्छामि, हीरकं, तेन, उपहारः प्रत्यागताः कर्त्तव्यं, कर्तव्यबोधः, मूल्यवान्, तदर्थम् ।

गौरवः - निधे ! मम पितृमहोदयाः ह्यः विदेशात् (i) ...............।

निधिः - शोभनम् ! ततः (ii) ............... किम् आनीतम् ?

गौरवः - एक: अतीव मूल्यवान् (iii) ............ ।

निधिः - किमपि स्वर्ण (iv) ............... वा ?

गौरवः - नहि ततोऽपि अधिक मूल्यवान् (v) ...............।

निधिः - कर्त्तव्यबोधः इति ? किम् (vi) ............... ।

गौरवः - एष बोधः यत् (vii) ............... देशनिन्दां त्यक्त्वा तदर्थं (viii) ............... पालनीयम्।

निधिः - सत्यम् । वयं भारतीयाः केवलं निन्दामः ।।

**10. मञ्जूषातः चितानि पदानि चित्वा अधोलिखितं 'मातापुत्रयोः संवाद' पूरयत ।**

**मञ्जूषा-** धनं, शर्करा, विना, पीतवान्, अम्ब, द्विदलं चे, करोषि, दुग्धं, प्रक्षालयामि, आनयामि ।

माता - कनक ! किं (i) ............ त्वम् ?

कनक - पाठं पठामि (ii) ...............।

माता - दुग्धं पीतवान् ?

कनक- (iii) ............... नैव पीतम् ।

माता - तर्हि दुग्धं (iv) .............. आपणं गच्छसि किम् ?

कनक - अम्ब ! किम् (v) ............... ततः ?

माता - आपणं गत्वा लवणं (vi) ............... तण्डुलान् गुडे (vii) ............... आनय ।

कनक - तर्हि शीघ्रं (viii) ............... स्यूतं च ददातु अम्बे !

**11. अधोलिखितं संवादं मजूषाप्रदत्तपदसहायतया पूरयित्वा पुनः लिखत ।**

**मञ्जूषा-** अद्य, प्रदर्शनी, भवत्याः, अनुजः, कलानिकेतने, जानामि, सौभाग्यम्, करिष्यामः, एकाकी, स्वागतम् ।

प्रभा - शोभने ! कुत्र गच्छसि ?

शोभना - चित्र (i) ............... द्रष्टुम् (ii) ...............।

प्रभा - (iii) ............. कलानिकेतनस्य प्राङ्गणे चित्र प्रदर्शनी प्रदर्शिता ।

शोभना - अहं (iv) ................ । अद्य अहमपि (v) ................ गृहम् आगमिष्यामि।

प्रभा - मम (vi) ................ । भवत्याः स्वागतम् । किम् एकाकी एव आगमिष्यसि ?

शोभना - न न ! मम माता (vii) .............. च अपि भविष्यतः ।

प्रभा - एवम् । प्रथमं मम गृहम् आगच्छतु । ततः मिलित्वा चलिष्यामः ।

शोभना - एवमेव (viii) ................ ।

**12. मञ्जूषातः उचितानि पदानि चित्वा अधोलिखितं गौरवसौरभयोः संवादं पूरयत ।**

| **मञ्जूषा-** त्वया, भविष्यति, उत्सवः, अवश्यमेव, विद्यालयम्, बालकाः, करिष्यसि, किम्, पितृजनाः, मङ्गलाचरणम् । |
|---|

गौरवः - किं त्वं श्वः (i) ................ गमिष्यसि ?

सौरभः - मर्म विद्यालये श्वः (ii) ............... अस्ति । अत: (iii) ............... अहं विद्यालयं गमिष्यामि ।

गौरवः - किम् अन्येऽपि (iv) ................ आगमिष्यन्ति ?

सौरभः - न केवलं बालकाः अपितु तेषां (v) ................ अपि आगमिष्यन्ति ।

गौरवः - त्वम् उत्सवे किं किं (vi) ................ ।

सौरभः - अहं (vii) ................. पठिष्यामि ।

गौरवः - (viii) ............. तत्र क्रीडाः अपि भविष्यन्ति ?

सौरभः - आम् । तत्र अनेकाः क्रीडाः भविष्यन्ति ।

**13. मञ्जूषातः उचितानि पदानि चित्वा अधोलिखितं 'मातापुत्रयोः संवाद' पूरयत ।**

| **मञ्जूषा-** नैव, दीपावली, स्वयमेव, रचयसि, तिमिराच्छन्नं, सन्ध्यासमयः, तान् अत्रानय, दीपकाः, स्वस्ति । |
|---|

पुत्रः - मातः किं त्वमद्य पक्वान्नं मिष्ठान्नं च (i) ................ ?

माता - पुत्र किं त्वं न जानासि यत् अद्य (ii) ................ उत्सवः अस्ति ?

पुत्रः - (iii) ............... तु । कथय, दीपमालिकाया: उत्सवः कीदृशः भवति ?

माता - अस्तु, त्वं (iv) .......... ज्ञास्यसि । अधुना (V) .......... सञ्जातः नभ: च (vi) .......... अस्ति ।

पुत्रः - ततः किम् ?

माता - गृहे (vii) ................ सन्ति । त्वं तान् (viii) ................ । अहं तान् प्रज्वालयामि ।

पुत्रः - यदाज्ञापयति माता ।

माता - स्वस्ति अस्तु ते ।

**14. अधोलिखितं संवादं मञ्जूषा प्रदत्तपद सहायतया पूरयित्वा पुनः लिखत ।**

धनेश: नीरेशः च विद्यालयस्य अल्पाहारगृहे उपविष्टौ, दशवर्षीय: रामेश्वर: आगम्य चायपात्राणि स्थापयति ।]

(धनेश और नीरेश विद्यालय के अल्पाहारगृह में बैठे हुए थे । दसवर्षीय रामेश्वर आकर चाय-पात्रों को रखता है।)

| **मञ्जूषा-** सफलतां, अवश्यम्, इच्छामि, पटनातः, सप्ताहः, दिवङ्गता, त्यक्त्वा, करवाणि, पठितुं, दुष्टः, भवता । |
|---|

धनेशः - अरे ! कदा प्रभृति अत्र कार्यं करोषि ? पूर्वं तु न अवलोकितः ।

रामेश्वरः - (i) .................. एव जातः ।

धनेशः - एवं सप्ताहः अभवत् । कुतः आगतः त्वम् ?

रामेश्वरः - (ii) .................. ।

धनेशः - त्वं मध्ये एव पठनं (iii) .................. कथं पटनातः इह आगतः ?

रामेश्वरः - किं (iv) .................. ? मम अभागिनो जनकः पूर्वं (v) .................. हतः । अधुना मम माता अपि (vi). ............... । अनाथः अहं कथं निर्वाहं कुर्याम्?

धनेशः - किं त्वं (vii) .................. नेच्छसि ?

रामेश्वरः - (viii) .................. परं विद्या नास्ति मम भाग्ये ।

**15.मञ्जूषातः उचितानि पदानि चित्वा अधोलिखितं संवादं पूरयत ।**

| **मञ्जूषा-** कृषकाः, तदा, प्रष्टुम्, आम्, भानुः, जानीमः, यदा, नृत्यन्ति, कदा, महोदये ! |
|---|

अध्यापिका - वसन्त ! किं त्वं किञ्चित् (i) .................. इच्छसि ?

वसन्तः - (ii) .................. महोदये ! अहं प्रष्टुम् इच्छामि यत् कोकिलः कदा गायति ?

अध्यापिका - कोकिल: (iii) .................. गायति (iv) ............... वसन्तागमनं भवति । सुमेधे ! कथय तमः (v) .................. नश्यति ?

सुमेधा - (vi) .................. ! यदा (vii) .................. उदयति, तमः तदा नश्यति ।

अध्यापिका - अति शोभनम् । मयूराः कदा (viii) ............?

भास्करः - अहं वदामि । यदा मेघाः गर्जन्ति तदा ।

अध्यापिका - शोभनम् ! कथयत, कृषकाः कदा नृत्यन्ति ?

सर्वेः - वयं जानीमः । यदा वृष्टिः भवति, कृषकाः नृत्यन्ति ।

**16. मञ्जूषातः उचितानि पदानि चित्वा अधोलिखितं संवादं पूरयत ।**

| **मञ्जूषा-** शोभनम्, अगच्छः, छात्राणाम्, ज्ञातम्, अकरोत्, अनिवार्यः, अहम्, अस्तु, प्रार्थनाम्, पुनः परीक्षाम् । |
|---|

स्वातिः - सखि ! किं त्वं यः विद्यालयं (i) .................. ?

शोणम् - स्वाते ! (ii) .................. तु ह्यः भ्रातुः विवाहम् अगच्छम् ।

स्वातिः - किं न अजानाः त्वं यत् संस्कृताध्यापिका ह्यः (iii) .................. लघुपरीक्षाम् (iv) .........।

शोणम् - मया (v) .................. आसीत्, परं भ्रातुः विवाहः अपि (vi) .................. आसीत् ।

स्वातिः - (vii) ................ त्वं श्वः अवश्यम् अध्यापिकां क्षमा याचस्व (viii) ................ च कुरु यत् सा पुनः परीक्षां नयतु ।

शोणम् - शोभनम् इदं मया अवश्यं कर्त्तव्यम् ।

**17. मञ्जूषातः पदानि विचित्य अधोलिखितं संवादं पूरयित्वा उत्तरपुस्तिकायां लिखत ।**

| **मञ्जूषा-** बान्धवेभ्यः, दीपावली, नवीनानि, शाटिकाम्, वितरिष्यामः, लक्ष्मीपूजनम्, गत्वा, मिष्टान्नम्, क्रीत्वा, दास्यसि । |
|---|

सुखदा - सखि, किं जानासि, अद्य कः उत्सवः अस्ति ?

नम्रता - अद्य (i) ................. अस्ति ।

सुखदा - तदा तु अद्य वयं (ii) .................. वस्त्राणि धारयामः ।

नम्रता - मम माता अपि नवीनां (iii) .................. धारयिष्यन्ति ।

सुखदा - अहं पित्रा सह विपणि (iv) .................. क्रीडनकानि (v) .................. च क्रेष्यामि ।

नम्रता - त्वं मिष्टान्नं (vi) .................. किं करिष्यसि ?

सुखदा - वयं मिष्टान्न परिवाराय (vii) ...............य दास्यामः ।

नम्रता - किं मित्रेभ्यः किञ्चित् न (viii) .................. ?

**18. अधोलिखितं संवादं मञ्जूषा प्रदत्तपदसहायतया पूरयित्वां पुनः उत्तरपुस्तिकायां लिखत ।**

| **मञ्जूषा-**प्राणरक्षा, उपायः, बृहदाकारः शुष्कं, गमिष्यामः, त्वम्, व्याकुलाः, बकः, शनैः शनैः, आपदि। |
|---|

बकः - अयि भो मण्डूकाः ! शृणुत । अस्य जलाशयस्य जलं शीघ्रमेव (i) .................. भविष्यति ।

मण्डूकाधिपतिः - हा हन्त ! कथम् अस्माकं (ii) .................. भविष्यति ?

बकः - इदानीं भवतः प्राणरक्षार्थम् एक एव (iii) .................. ।

मण्डूकाधिपतिः - शीघ्रं कथय । अस्माकं प्राणाः (iv) .................. भवन्ति ।

बकः - अत्र समीपे एव एकः (v) ............ जलाशयः । तस्य जलं कदापि न शुष्यति । तत्र गन्तव्यम् ।

मण्डूकाधिपतिः - भो मित्र ! कथं वयं तत्र (vi) ................... ।

बकः -मित्रस्य कर्त्तव्यं (vii) .................. मित्ररक्षा । अतः अहम् एव युष्मान् तत्र नेष्यामिः ।

मण्डूकाधिपतिः - ननु सत्यं किम् । वयं तु बहवः (viii) .................. एक एव ।

**19. निम्नलिखितं संवादं मजूषाप्रदत्तपदसहायतया पूरयित्वा पुनः उत्तरपुस्तिकायां लिखत ।**

| **मञ्जूषा-** मूर्खाणां, कार्याणि, अनु वात्, परस्य, आत्मनः, महान्, बुद्धिमान्, शिक्षते, मूर्खः,मूर्खतमः |
|---|

राघवः - भो रमणीक ! भवान् कथम् ईदृश: (i) ...................... जातः ?

रमणीकः - (ii) ...................... कृपया एव ।

राघवः - भोः कथं मूर्खाणां कृपया भवान् (iii) ......... जातः ?

रमणीकः - आम् ! अहं मूर्खः कृतानि (iv) ........ .... अपश्यं तानि अत्यजेत् ।

राघवः - एवम् । परेषाम् (v) ...................... शिक्षा गृहीत्वा भवान् बुद्धिमान् जात: किम् ?

रमणीकः - सत्यम् ! यः परेषां अनुभवात् (vi) ...................... सः एव बुद्धिमान् ।

राघवः - कः तावत् (vii) ...................... ?

रमणीकः - यः (viii) .................... अनुभवात् न शिक्षते, पुन: आमूलात् प्रयत्नं करोति ।

**19. निम्नलिखितं संवादं मजूषा प्रदत्तपद सहायतया पूरयित्वा पुनः लिखत ।**

| **मञ्जूषा-** कासरोगी, सत्यम्, कासति, कुक्कुराः, चौराणां, गुणाः, दधिसेवनम्, गुणः, सम्यक्, तत्कथम् । |
|---|

रुग्णः - भो वैद्य ! औषधं यच्छ, परन्तु अहं (i) ...................... न त्यक्ष्यामि ।

वैद्यः - चिन्ता मा अस्तु । दधिसेवने बहवः (ii) ................. ।

रुग्णः - किं (iii) ...................... इदम् ? के च ते गुणाः ?

वैद्यः - (iv) .................. यदि दधि सेवते, तस्य गृहं चौरा: न प्रविशन्ति ।

रुग्णः - दधिसेवनेन सह (v) ... ......... कः सम्बन्धः ?

वैद्यः - दधिसेवी कासरोगी सर्वां रात्रिं (vi) ...................... एव, जागर्ति कुत: चौरभयम्।

रुग्णः - कस्तावत् अन्यः (vii) .......... .......... ?

वैद्यः - (viii) .................... तं न दशन्ति ।

## <u>सन्धिः</u>

**1.अस्माकं <u>सन्निधिं</u> कुर्यात्**

(क) सत्+निधिम् (ख) सन्+निधिम् (ग) सन्नि+धिम् (घ) सात् +धिम्

**2. <u>क्षयमायाति सम् +चयात्</u>**

(क) सन्चयात् (ख)सञ्चयात् (ग) संचयात् (घ) संचियात्

**3. <u>अतिदूरं किञ्चिद् दुर्गम् वनं प्रविष्ट: भवेत्</u>**

(क)किम् +चित् (ख)कान्+चित् (ग) किम्+चित् (घ)कंचित्

**4. <u>षट्+एते</u>पाठका: गुणा:**

(क)षखेते (ख) षटेते (ग)षदेते (घ) षडेते

**5. <u>षड् ऋतव:</u> एवमेनाभय:**

(क) षट्+ऋतव: (ख)षद् ऋतव: (ग)षत् ऋतव: (घ) षस् ऋतव:

**6. स: <u>चेत्+निरर्थकम्</u>नीत:**

(क) चेदिरर्थकम्　(ख) चेन्निरर्थकम्　(ग) चेनिरर्थकम्　(घ) चेपिरनिरर्थकम्

**7. क्रोधाद्भवतिसम्मोह:**

(क) क्रोधाध्+भवति　(ख) क्रोधान् +भवति　(ग)क्रोधात्+भवति　(घ) क्रोधान् +भवति

**8. वार्ष्णेय बलात्+इवनियोजित:**

(क)बलानिव　(ख) बलाधिव　(ग)बलानिव　(घ) बलादिव

**9. प्रत्येक अयनस्य अवधि:षण्मासा:**

(क) षट्+मासा:　(ख) षद्+ मासा:　(ग) षण+मासा:　(घ) षस्+मासा:

**10.धिग्युष्मान् ! अहमेव शिरोमणि:**

(क)धिख् युष्मान्　(ख) धिक् +युष्मान्　(ग) धिक् युष्मान　(घ) धिद् युष्मान

**11.कृष्ण प्रमाथि बलवद्दृढम्**

(क)बलवात् +दृढम्　(ख)बलवान् +दृढम्　(ग) बलवन् +दृढम्　(घ) बलवत्+दृढम्

**12.एतद् राजभवनंपरित्ज्यवनम्गच्छाम:**

(क)एताद् +राजभवनम्　(ख)एतान्+ राजभवनम्　(ग)एतन् +राजभवनम्　(घ) ऐतन् +राजभवनम्

**13.-तदेतद् राजभवनम् गच्छाम:**

(क)तत्+एतद्　(ख)ताद् +एतद्　(ग) तात्+ऐतद्　(घ)न कोSपि

**14.-वाक् +मयम्**

(क)वाक्मयम्　(ख)वाङ्मयम्　(ग)वान्मयम्　(घ)वांगमयम्

**15.- दिग्गज:**

(क)दिन् +गज:　(ख)दिद्+गज:　(ग)दिक् +गज:　(घ)दिक+गज:

**16.-भवन्मनोरथ:**

(क)भबद् मनोरथ　(ख)भवद् +मनोरथ:　(ग)भावद् +मनोरथ:　(घ)भवत्+मनोरथ:

**17.- काकादन्य:**

(क)काकान्+ अन्य:　(ख)काकाथ+अन्य:　(ग)काकाध+अन्य:　(घ)काकात्+अन्य:

**18.- केचित्+दग्धा:**

(क)केचिद् दग्धा:　(ख)कोचिद् दग्धा:　(ग)केचिस् दग्धा:　(घ)केचिध् दग्धा:

**उत्तरकुञ्जिका व्यञ्जनसन्धे: अभ्यासप्रश्नानां उत्तराणि:**

1. (क) सत्+निधिम्
2. (ख) सञ्चयात्
3. (ग)किम्+चित्
4. (घ)षडेते
5. (क) षट्+ऋतव:
6. (ख) चेन्निरर्थकम्
7. (ग)क्रोधात्+भवति
8. (घ)बलादिव
9. (क) षट्+मासा:
10. (ख) )धिक् +युष्मान्
11. (घ)बलवत्+दृढम्
12. (ग)एतन् +राजभवनम्
13. (क) तत्+एतद्
14. (ख)वाङ्मयम्
15. (ग)दिक्+गज:
16. (क)भवत्+मनोरथ:
17. (घ)काकात्+अन्य:
18. (क)केचिद् दग्धा:

# विसर्गसन्धिः

द्वयोः वर्णयोः मेलनेन यदि किमपि परिवर्तनं भवति तर्हि तत् सन्धिः कथ्यते। यदि एतत् परिवर्तनं विसर्गस्य स्थाने भवति तर्हि सः विसर्गसन्धिः उच्यते।

## I. विसर्गस्य उत्वम्

ह्रस्वात् 'अ'कारात् परम् यदि विसर्गः, तदनन्तरं यदि ह्रस्वः 'अ'कारः / वर्गीयतृतीय-चतुर्थ-पञ्चमवर्णाः / अथवा य् र् ल् व् वर्णाः - एतेषु कोऽपि वर्णः आगच्छति तर्हि विसर्गस्य स्थाने 'उ'कारः आगच्छेत्।

| | | | | |
|---|---|---|---|---|
| अः | + | अ | = | विसर्गस्य स्थाने 'उ'<br>अकारस्य स्थाने 'ऽ' च |
| अः | | ग् / ज् / ड् / द् / ब् | = | विसर्गस्य स्थाने 'उ' |
| अः | + | घ् / झ् / ढ् / ध् / भ् | = | विसर्गस्य स्थाने 'उ' |
| अः | + | ङ् / ञ् / ण् / न् / म् | = | विसर्गस्य स्थाने 'उ' |
| अः | + | य् / र् / ल् / व् / ह् | = | विसर्गस्य स्थाने 'उ' |

1. सः + अवसत् = सः + अवसत्

स उ + अवसत् ( विसर्गस्य स्थाने उ )

सो + ऽवसत् (अ + उ =ओ > स + उ = सो एवं अकारस्य स्थाने ऽ )

सोऽवसत्

द्वितीयपदस्य 'अ'कारः अवग्रहः [ऽ] अभवत्।

2. बालः + धावति = बाल उ + धावति (अ + उ = ओ > बाल + उ = बालो )

बालो + धावति

बालो धावति

**उदाहरणानि**

| | | | | |
|---|---|---|---|---|
| 1. अन्य: | + | अपि | = | अन्योऽपि |
| 2. क : | + | अत्र | = | कोऽत्र |
| 3. राम: | + | गत: | = | रामो गत: |
| 4. तत: | + | जम्बूक: | = | ततो जम्बूक: |
| 5. ग्रन्थ: | + | दर्पण: | = | ग्रन्थो डम्बर: |
| 6. क्रुद्ध: | + | दर्पेण | = | क्रुद्धो दर्पेण |
| 7. अत: | + | बालिका | = | अतो बालिका |
| 8. कृष्ण: | + | घनश्याम: | = | कृष्णो घनश्याम: |
| 9. अज: | + | झष: | = | अजो झष: |
| 10. क: | + | ढक्काम् | = | को ढक्काम् |
| 11. दशरथ: | + | नामक: | = | दशरथो नामक: |
| 12. तत: | + | मरणम् | = | ततो मरणम् |
| 13. वृक्ष: | + | वर्धते | = | वृक्षो वर्धते |
| 14. सिंह: | + | गर्जति | = | सिंहो गर्जति |
| 15. छात्र: | + | हसति | = | छात्रो हसति |

**II.विसर्गस्य सत्वम् , शत्वम्, षत्वम् च ।**

1. विसर्गात् परं यदि स् / त् / थ् वर्ण: आगच्छति तर्हि विसर्गस्य स्थाने 'स्' भवति ।
2. विसर्गात् परं यदि श् / च् / छ् वर्ण: आगच्छति तर्हि विसर्गस्य स्थाने 'श्' भवति ।
3. विसर्गात् परं यदि ष् / ट् / ठ् वर्ण: आगच्छति तर्हि विसर्गस्य स्थाने 'ष्' भवति ।

| विसर्ग: | + | स् / त् / थ् | = | विसर्गस्य स्थाने 'स्' |
|---|---|---|---|---|
| विसर्ग: | + | श् / च् / छ् | = | विसर्गस्य स्थाने 'श्' |
| विसर्ग: | + | ष् / ट् / ठ् | = | विसर्गस्य स्थाने 'ष्' |

**उदाहरणानि**

1. कृष्ण: + तदा = कृष्ण: + तदा

कृष्ण स् + तदा

<u>कृष्णस्तदा</u>

2. इत: + तत: = इत: + तत:

इतस् + तत:

<u>इतस्तत:</u>

3. क: + चन = क: + चन

कश् + चन

<u>कश्चन</u>

4. हरि: + शेते = हरि: + शेते

हरिश् + शेते

<u>हरिश्शेते</u>

5. धनु: + टङ्कार: = धनु: + टङ्कार:

धनुष् + टङ्कार:

<u>धनुष्टङ्कार:</u>

6. गज: + षष्ठ: = गज: + षष्ठ:

गजष् + षष्ठ:

<u>गजष्षष्ठ:</u>

**III. विसर्गस्य रत्वम्**

अ / आ भिन्नस्वरात् परं यदि विसर्ग:, तदनन्तरं स्वरा: / वर्गतृतीय / चतुर्थ / पञ्चमवर्णा: / अथवा य् र् ल् व् वर्णा: आगच्छन्ति तर्हि विसर्गस्य स्थाने 'र्' आगच्छति ।

| | | | | | |
|---|---|---|---|---|---|
| अ / आ भिन्नस्वर: | : | + | स्वरा: | = | विसर्गस्य स्थाने 'र्' |
| अ / आ भिन्नस्वर: | : | + | ग् / ज् / ड् / द् / ब् | = | विसर्गस्य स्थाने 'र्' |
| अ / आ भिन्नस्वर: | : | + | घ् / झ् / ढ् / ध् / भ् | = | विसर्गस्य स्थाने 'र्' |
| अ / आ भिन्नस्वर: | : | + | ङ् / ञ् / ण् / न् / म् | = | विसर्गस्य स्थाने 'र्' |
| अ / आ भिन्नस्वर: | : | + | य् / र् / ल् / व् | = | विसर्गस्य स्थाने 'र्' |

**उदाहरणानि**

१] नि: + बल: = निर् + बल: = निर्बल:

२] नि: + आशा = निर् + आशा = निराशा

३] पितुः + इच्छा = पितुर् + इच्छा = पितुरिच्छा

४] मुनिः + अयम् = मुनिर् + अयम् = मुनिरयम्

५] देवीः + उवाच = देवीर् + उवाच = देवीरुवाच

**IV.विसर्गलोपः**

अ] 'आ' कारात् परम् यदि विसर्गः, तदनन्तरं स्वराः / वर्गतृतीय / चतुर्थ / पञ्चमवर्णाः / अथवा य् र् ल् व् ह् वर्णाः आगच्छन्ति तर्हि विसर्गस्य लोपः भवति ।

आ] एवम् 'अ' कारात् परं यदि विसर्गः तदनन्तरं 'अ'भिन्नस्वराः चेत् विसर्गलोपः।

इ] एषः / सः पदस्य अनन्तरं 'अ'भिन्नवर्णः भवेत् विसर्गलोपः।

| आकारोत्तरम् | : | + | स्वराः | = | विसर्गस्य लोपः |
|---|---|---|---|---|---|
| आकारोत्तरम् | : | + | ग् / ज् / ड् / द् / ब् | = | विसर्गस्य लोपः |
| आकारोत्तरम् | : | + | घ् / झ् / ढ् / ध् / भ् | = | विसर्गस्य लोपः |
| आकारोत्तरम् | : | + | ङ् / ञ् / ण् / न् / म् | = | विसर्गस्य लोपः |
| आकारोत्तरम् | : | + | य् / र् / ल् / व् / ह् | = | विसर्गस्य लोपः |
| आकारोत्तरम् | : | + | अ भिन्नस्वराः | = | विसर्गस्य लोपः |
| एष | : | + | अ भिन्नवर्णः | = | विसर्गस्य लोपः |
| स | : | + | अ भिन्नवर्णः | = | विसर्गस्य लोपः |

**उदाहरणानि**

१] बालाः + अत्र = बाला अत्र

२] वृद्धाः + यान्ति = वृद्धा यान्ति

३] सूर्यः + उदेति = सूर्य उदेति

४] रामः + आगच्छति = राम आगच्छति

५] एषः + विष्णुः = एष विष्णु

६] सः + करोति = स करोति

## ( I )विसर्गस्य उत्वम्   ( अभ्यास प्रश्ना: )

**1.-क:+अपि**

(क)कोSपि

(ख)क+अपि

(ग)का+अपि

(घ)क:+आपि

**2.-शक्र:+अहम्**

(क)शक्रा:+अहम्

(ख)शक्र:+ओहम्

(ग)शक्र+हम्

(घ)शक्रोSहम्

**3-चक्षुष:+अस्य**

(क)चाक्षुष+अस्य

(ख)चक्षुस:+अस्य

(ग)चक्षुषोSस्य

(घ)चक्षुषो+आस्य

**4-य:+अन्यथा**

(क)यो+आन्यथा

(ख)योऽन्यथा

(ग)ये+अन्यथा

(घ)या +अन्यथा

**5-वस्तुत:+अहम्**

(क)वस्तुतोSहम्

(ख)वस्तुतो+अहम्

(ग)वस्तुतो +आहम्

(घ)वस्तुते+अहम्

**6-देशान्तरेभ्योSपि**

(क)देशान्तरेभ्यो+ॲपि

(ख)देशान्तरेभ्यो+आपि

(ग)देशान्तरेभ्य:+अपि

(घ)देशान्तर:+ओपि

**7-सन्तुष्टोSभवत्**

(क)सन्तुष्टे +अभवत

(ख)सन्तुष्टो+आभवत्

(ग)सन्तुष्ट:+भवत्

(घ)सन्तुष्ट:+अभवत्

**8-जागरुकोSहम्**

(क)जागरुके+अहम्

(ख)जागरुको+आहम्

(ग) जागरुक:+अहम्

(घ)जागरुक:+हम्

**9-एकोSपि**

(क)एको+आपि

(ख)एक:+अपि

(ग)एक+अपि

(घ)एक:+आपि

**10-कोशोSयम्**

(क)कोश:+अयम्

(ख)कोशो+आयम्

(ग)कोश+अयम्

(घ)कोश:+यम्

**उत्तराणि----**

**1.** (क)कोऽपि

**2.** (घ)शक्रोऽहम्

**3.**(ग)चक्षुषोऽस्य

**4.**(ख)योऽन्यथा

**5.**(क)वस्तुतोऽहम्

**6.**(ग)देशान्तरेभ्य:+अपि

**7.**(घ)सन्तुष्ट:+अभवत्

**8.** (ग) जागरुक:+अहम्

**9.** (ख)एक:+अपि

**10.**(क) कोश:+अयम्

**(II) विसर्गस्य सत्वम् / शत्वम् /षत्वम्  ( अभ्यास प्रश्ना: )**

**(अ)सत्वम्**

**1-शिष्य:+स्वमेधया**

(क) शिष्यस्स्वमेधया

(ख) शिष्यश्स्वमेधया

(ग) शिष्यष्स्वमेधया

(घ) शिष्यष्सवमेधया

**2-पापतर:+तत:**

(क) न कोऽपि

(ख) पापतरश्तत:

(ग) पापतरष्तरत:

(घ) पापतरस्तत:

**3- जना:+तम्**

(क) जनाष्तम्

(ख) जनाश्तम्

(ग) जनास्तम्

(घ) जानास्तम्

**4-सर:तीरे**

(क) सरश्तीरे

(ख) सरस्तीरे

(ग) सरष्तीरे

(घ) सारस्तीरे

**5-रिपवस्सम्भाष्यन्ते**

(क) रिपव:+सम्भाष्यन्ते

(ख) रिपव:+ सम्भाष्यनते

(ग) रिपवश्+सम्भाष्यन्ते

(घ) रिपवष्+ सम्भाष्यनते)

**6-यस्सोढुम्**

(क) यो+सोढुम्

(ख) यस्+ सोढुम्

(ग) यश् (सोढुम्

(घ) य:+सोढुम्

**7-सर्वस्तरतु**

(क) सर्वा:+ तरतु
(ग) सर्व:+तरतु
(ख) सर्वस+ तरतु
(घ) सर्वे:+तरतु

**8- आधारस्सूर्य:**

(क) आधारास् +सूर्य:
(ग) आधारो:+सूर्य:
(ख) आधार:+सूर्य:
(घ) आधारश् +सूर्य:

## उत्तराणि---

**1.**(क) शिष्यस्स्वमेधया
**2.**(घ) पापतरस्तत:
**3.**(ग) जनास्तम्
**4.**(ख) सरस्तीरे
**5.**(क) रिपव:+सम्भाष्यन्ते
**6.**(घ) य:+सोढुम्
**7.**(ग) सर्व:+तरतु
**8.**(ख) आधार:+सूर्य:

## (ब)शत्वम्----

**1-अध्यापका:+च**

(क) अध्यापकाश्च
(ग) अध्यापकष्च
(ख) अध्यापकस्च
(घ) अध्यापक:च

**2-सुगन्धि:+च**

(क) सुगन्धिस्च
(ग) सुगन्धिष्च
(ख) सुगन्धिश्च
(घ) सुगन्धे:च

**3-कृषि:+शिल्पकला**

(क) कृषिष्शिल्पकला
(ग) कृषिश्शिल्पकला
(ख) कृषिस्शिल्पकला
(घ) न कोऽपि

**4-बालिका:+च**

(क) न कोऽपि
(ग) बालिकाष्च
(ख) बालिकास्च
(घ) बालिकाश्च

**5- कश्शुचि:**

(क) क:+शुचि:
(ग) कास् +शुचि:
(ख) का:+शुचि:
(घ) काश+शुचि:

**6-अधिगततत्वश्शिष्यहिताय**

(क) अधिगततत्वस्+शिष्यहिताय
(ख) अधिगततत्व:+शिष्यहिताय

(ग) अधिगत:+शिष्यहिताय

(घ) अधिगततत्वा:+ शिष्यहिताय

**7-चक्षुश्शनै**:

(क) चक्षुष् +शनै:

(ख) चक्षुस् +सनै:

(ग) चक्षु:+शनै:

(घ) चक्षुर् +शनै:

**8-कश्चित्**

(क) काश्+चित्

(ख) का:+चित्

(ग) कास् +चित्

(घ) क:+चित्

## उत्तराणि---

**1.**(क) अध्यापकाश्च

**2.**(ख) सुगन्धिश्च

**3.**(ग) कृषिश्शिल्पकला

**4.**(घ) बालिकाश्च

**5.**(क) क:+शुचि:

**6.**(ख) अधिगततत्व:+शिष्यहिताय

**7.**(ग) चक्षु:+शनै:

**8.**(घ) क:+चित्

## (स) षत्वम्---

**1-क:+टीकते**

(क) कष्टीकते

(ख) काष्टीकते

(ग) केष्टीकते

(घ) कष्ठीकते

**2-बहि:+करिष्यामि**

(क) बाहिष्करिष्यामि

(ख) बहिष्करिष्यामि

(ग) बहेष्करिष्यामि

(घ) न कोSपि

**3- कृष्ण:+ ठक्कुर:**

(क) कष्णोष्ठक्कुर:

(ख) कृष्णास्टक्कुर:

(ग) कोSपि

(घ) कृष्णष्ठक्कुर:

**4-राम:+टीकते**

(क) रामश्टीकते

(ख) रमेष्टीकते

(ग) रामष्ठीकते

(घ) रामष्टीकते

**5-धनु:+टंकार:**

(क) धनुश्टंकार:

(ख) धनुस्टंकार:

(ग) धानुष्टंकार:

(घ) धनुष्टंकार:

**6- नि:+ ठुर:**

(क) निश्टुर:

(ख) निसठुर:

(ग) निष्ठुर:

(घ) निषठुर:

## उत्तराणि

**1.**(क) कष्टीकते

**2.**(ख) बहिष्करिष्यामि

**3.**(घ) कृष्णाष्ठक्कुर:

**4.**(घ) रामष्टीकते

**5.**(घ) धनुष्टंकार:

**6.**(ग) निष्ठुर:

## (III) विसर्गस्य रुत्वम् ( अभ्यास प्रश्ना: )

**1-चक्षु:+हीन:**

(क) चक्षुर्हीन:

(ख) चक्षुो:+अहीन:

(ग) चक्षूर् +हीन:

(घ) चक्षु+रहीन:

**2- सृष्टि:+एषा**

(क) सृष्टि +एषा

(ख) सृष्टिरेषा

(ग) सृष्टि:+ऐषा

(घ) सृष्टि +रेषा

**3-पितु:+उपदेशेन**

(क) पितरो+उपदेशेन

(ख) पितु+रुपदेशेन

(ग) पितुरुपदेशेन

(घ) पित:+उपदेशेन

**4-पुन:+आवृत्य**

(क) पुनरावृत्य

(ख) पुन:+रावृत्य

(ग) पुन:+अवृत्य

(घ) पुनर +आवृत्य

**5- उच्चैरक्रन्दनम्**

(क) उच्चैर+अक्रन्दनम्

(ख) उच्चै:+क्रन्दनम्

(ग) उच्चै:+अक्रन्दनम्

(घ) उच्चे:+क्रन्दनम्

**6-चक्षुर्दानम्**

(क) चक्षुर्+अदानम्

(ख) चक्षुर+दानम्

(ग) चक्षु:+दानम्

(घ) चक्षु:+अदानम्

**7-संस्कृतिरपि**

(क) संस्कृति+रपि

(ख) संस्कृति+आपि

(ग) संस्कृते:+अपि

(घ) संस्कृति:+अपि

**8-प्रकृतिरेव**

(क) प्रकृति+रेव

(ख) प्रकृति:+ऐव

(ग) प्रकृति:+एव

(घ) प्रकृति:+रेव

## उत्तराणि

**1.**(क) चक्षुर्हीन:

**2.**(ख) सृष्टिरेषा

**3.**(ग) पितुरुपदेशेन

**4.**(क) पुनरावृत्य

**5.**(ख) उच्चै:+क्रन्दनम्

**6.**(ग) चक्षु:+दानम्

**7.**(घ) संस्कृति:+अपि

**8.**(घ) प्रकृति:+रेव

## (IV) विसर्गस्यलोप:( अभ्यास प्रश्ना: )

**1-तप:+उच्यते**

(क) तपा+उच्यते

(ख) तप उच्यते

(ग) तपो+ऊच्यते

(घ) तप+रुच्यते

**2.-पाठका:+गुणा:**

(क) पाठका गुणा:

(ख) पाठक+गुणा:

(ग) पाठका +अवगुणा:

(घ) पाठका+अगुण:

**3-आदर्श:+एव**

(क) आदर्शा+एव

(ख) आदर्श:+ऐव

(ग) आदर्श+ऐव

(घ) आदर्श +एव

**4-स:+सुखी**

(क) सो+सुखी

(ख) स +असुखी

(ग) सा +सुखी

(घ) स सुखी

**5-काम एषा**

(क) कामो+एषा

(ख) कामे+एषा

(ग) काम:+एषा

(घ) काम् +एषा

**6-स पापकर्मा**

(क) सो+पापकर्मा

(ख) सा+पापकर्मा

(ग) स:+पापकर्मा

(घ) स +अपापकर्मा

**7-सज्जना एव**

(क) सज्जनो+एव

(ख) सज्जने+एव

(ग) सज्जना+ऐव

(घ) सज्जना:+एव

**8-य इच्छति**

(क) यो +इच्छति

(ख) या+एच्छति

(ग) य+उच्छति

(घ) य:+इच्छति

## उत्तराणि

**1.**(ख) तप उच्यते
**2.**(क) पाठका गुणा:
**3.**(घ) आदर्श एव
**4.**(घ) स सुखी
**5.**(ग) काम:+एषा
**6.**(ग) स:+पापकर्मा
**7.**(घ) सज्जना:+एव
**8.**(घ) य:+इच्छति

**विसर्ग सन्धि: ( पुस्तकस्य अभ्यास प्रश्ना:)**

**1-केन प्रयुक्तोऽयम् पुरुष:पापं चरति।**

(क) प्रयुक्त:+अहम्
(ख) प्रयुक्तो+हम्
(ग) प्रयुक्त+अहम्
(घ) प्रयुक्त:+हम्

**2-अपूर्व:कोशोऽयम् विद्यते तव भारति।**

(क) कोशो+यम्
(ख) कोश:+अयम्
(ग) कोश:+यम्
(घ) कोशे+अयम्

**3-क: शुचिरिह?**

(क) शुची +इह
(ख) शुचि+रिह
(ग) शुचि:+इह
(घ) शुचि+ ह

**4-लोके चक्षुर्दानम् दुष्करम्**

(क) चक्षो:+दानम्
(ख) चक्षुर+दानम्
(ग) चक्षु+दानम्
(घ) चक्षु:+दानम्

**5-वाक् +मयम् तप उच्यते।**

(क) वाङ्मयम्
(ख) वांगमयम्
(ग) वाड्मयम्
(घ) वाक्मयम्

**6- वागर्थौ इव पार्वती परमेश्वरौ।**

(क) वाग+अर्थौ
(ख) वाक् +अर्थौ
(ग) वाग्+अर्थौ
(घ) वाद्+ अर्थौ

**7- स विवेक:इति ईरित:।**

(क) सावि+वेक:
(ख) सा विवेक:
(ग) स:+विवेक:
(घ) न कोऽपि

**8-विद्यमानोऽस्य सर्वम् क्रियाकलापं पश्यामि।**

(क) विद्यमान् +अस्य
(ख) विद्यमान+अस्य
(ग) विद्यमानो+स्य
(घ) विद्यमान:+अस्य

**9-वाचं परुषां य:+ अभ्युदीरयेत्।**

(क) य:+ अभ्युदीरयेत्
(ख) या + अभ्युदीरयेत्
(ग) योभ्यु +दीरयेत्
(घ) न कोऽपि

**10- <u>सर्वस्तरतुदुर्गाणि</u>**

(क) सर्ब: + तरतु

(ग) सर्व+तरतु

(ख) सर्व:+तरतु

(घ) सर्व+तरतू

**11- <u>परैर्न</u> परिभूयते ।**

(क) परो+न

(ग) परै:+न

(ख) परे:+न

(घ) परोर +न

**12-सदाचार <u>प्राणेभ्य:+अपि</u> विशेषत:।**

(क) प्राणेभ्या+अपि

(ग) प्राणेभ्य+अपि

(ख) प्राणेभ्य+पि

(घ) प्राणेभ्योऽपि

**13- <u>स्थितिरुच्चै:</u> पयोदानाम्**

(क) स्थिति:+उच्चै:

(ग) स्थितिह् +उच्चै

(ख) स्थितिर +उच्चै:

(घ) स्थिती:+उच्चै

**14-<u>सृष्टि:+एषा</u> जगत्पते:।**

(क)सृष्टिर् एषा

(ग) सृष्टिरुषा

(ख)सृष्टिरेषा

(घ) सृष्टिरोषा

**15-अत्र <u>वृष्टे:+अभिनन्दनम्</u> करोमि।**

(क) वृष्ट:अभिनन्दनम्

(ग) वृष्टेरभिनन्दनम्

(ख) वृष्टोरभिनन्दनम्

(घ) वृषाभिनन्दनम्

**16-शिव:<u>वागीश:</u> अपि कथ्यते।**

(क) वागी+श:

(ग) वागी+ईश:

(ख) वाग्+ईश:

(घ) वाक् +ईश:

**17- <u>क:+चित्</u> अत्र आगच्छति।**

(क) कश्चित्

(ग) कोचित्

(ख) काश्चित्

(घ) कैश्चित्

**18-अत्रान्तरे <u>ब्राह्मण:+अपि</u> गृहं उपावृत:।**

(क) ब्राह्मणो अपि

(ग) ब्राह्मणोपि

(ख) ब्राह्मणोऽपि

(घ) ब्राह्मणेपि

**19-मम नृत्यं <u>प्रकृतेराराधना</u> ।**

(क) प्रकृतेरा+आराधना

(ग) प्रकृते:+आराधना

(ख) प्रकृति:+आराधना

(घ) न कोऽपि

**20-अस्य पिता किं <u>तप:+तेपे</u>।**

(क) तपो तेपे

(ग) तपश्तेपे

(ख) तपास्तेपे

(घ) तपस्तेपे

## उत्तराणि

| | | |
|---|---|---|
| **1.**(क) प्रयुक्त:+अहम् | **8.**(घ) विद्यमान:+अस्य | **15.**(ग) वृष्टेरभिनन्दनम् |
| **2.**(ख) कोश:+अयम् | **9.**(क) य:+ अभ्युदीरयेत् | **16.**(घ) वाक् +ईश: |
| **3.**(ग) शुचि:+इह | **10.**(ख) सर्व:+तरतु | **17.**(क) कश्चित् |
| **4.**(घ) चक्षु:+दानम् | **11.**(ग) परै:+न | **18.**(ख) ब्राह्मणोऽपि |
| **5.**(क) वाङ्मयम् | **12.**(घ) प्राणेभ्योऽपि | **19.**(ग) प्रकृते:+आराधना |
| **6.**(ख) वाक् +अर्थौ | **13.**(क) स्थिति:+उच्चै: | **20.**(घ) तपस्तेपे |
| **7.**(ग) स:+विवेक: | **14.**(ख) सृष्टिरेषा | |

## <u>समास:</u>

(119) पाठ्यक्रमे निर्धारिता: समासा:- (वाक्येषु समस्तपदानां विग्रह: विग्रहपदानां समास:)

1. तत्पुरूष:- विभक्ति:, नञ्, उपपद: (2 अंकौ)
2. द्वन्द्व: (1 अंक:)

3. अव्ययीभाव:(अनु,उप,सह,निर्,प्रति,यथा) (1 अंक:)

'समसनम्' इति समासः। समास शब्द का अर्थ है - संक्षेपण। अर्थात्दोयादो से अधिक पदों में प्रयुक्त विभक्तियों, समुच्चय बोधक 'च' आदिको हटाकर एक पद बनाना। यथा- गायने कुशला = गायनकुशला। इसी तरहराज्ञः पुरुषः = राजपुरुषः पदों में विभक्ति-लोप, सीता च रामश्च = सीतारामौ मेंसमुच्चय बोधक = च लोप हुआ है। इसी प्रकार विद्या एव धनं यस्य सः =विद्याधनः पद में कुछ पदों का लोप कर संक्षेपण क्रिया द्वारा गायनकुशला,राजपुरुषः, सीतारामौ तथा विद्याधनः पद बनाए गए है!कहीं-कहीं पदों के बीच की विभक्ति का लोप नहीं भी होता है।यथा खेचरः, युधिष्ठिरः, वनेचरः आदि। ऐसे समासों को अलुक्समासकहतेहैं ।

पदों की प्रधानता के आधार पर समास के मुख्यतः चार भेद होते हैं।अव्ययीभाव (2) तत्पुरुष (3) द्व (4) बहुव्रीहि । तत्पुरुष के दो उपभेदभी हैं कर्मधारय एवं द्विगु। इस प्रकार सामान्य रूप से समास के छः भेद है

1. **अव्ययीभाव**

पूर्वपदप्रधानोव्ययीभाव:। अर्थात् अव्ययीभावसमासे पदद्वयं भवति। प्रथमं पदमव्ययं तथा उत्तरपदं सुबन्तं भवति । समासे सति पदद्वयमपि अव्ययं भवति।

(इस समास में पहला पद अव्यय होने के साथ ही साथ प्रधान भी होता है। समासहोने पर समस्त पद अव्यय बन जाता है तथा नपुंसकलिङ्ग में प्रयुक्त होता है,)

यथा -

| समस्तं पदम् | = | विग्रहवाक्यम् |
|---|---|---|
| यथाशक्ति | = | शक्तिम् अनतिक्रम्य |
| निर्विघ्नम् | = | विघ्नानाम् अभावः |

| | | |
|---|---|---|
| उपगङ्गम् | = | गङ्गायाः समीपम् |
| अनुरूपम् | = | रूपस्य योग्यम् |
| प्रत्येकम् | = | एकम् एकम् प्रति |
| प्रतिगृहम् | = | गृहं गृहम् प्रति |
| निर्मक्षिकम् | = | मक्षिकाणाम् अभाव: |

**2. तत्पुरुष समास:**

यस्मिन् समासे उत्तरपदं प्रधानं भवति स: तत्पुरूषसमास: । अत्र पदद्वयं भवति। प्रथमं पदं विविधासु विभक्तिषु भवति । अर्थात् अत्र द्वितीयांतमारभ्य सप्तम्यन्तं यावत् पूर्वपदै: सह सुबन्त: समस्यते । इस समास में प्राय: उत्तर पद की प्रधानता होती है। इसके दोनों पदों मेंअलग-अलग विभक्तियाँ होती हैं।कहीं- कहीं पर दोनों पदों में समान विभक्ति भीहोती है। ऐसी स्थिति में पूर्वपद की विभक्ति का लोप करके समस्त पद बनायाजाता है।इसमे द्वितीया से सप्तमी तक की विभक्ति का लोप करके समस्त पदबनाया जाता है।

**उदाहरण–**

**द्वितीया तत्पुरुष:**

श्रित: ,अतीत:, पतित:, गत: प्राप्त:, आपन्न: इत्यादिभि: सह द्वितीयान्तं पूर्वपदंसमस्यते।

| समस्तं पदम् | - | विग्रहवाक्यम् |
|---|---|---|
| शरणम्आगतः | - | शरणागत: |
| शरणं प्राप्तः | - | शरणप्राप्त: |
| सुखं प्राप्तः | - | सुखप्राप्त: |

**तृतीया तत्पुरुष:**

तृतीयान्त-अर्थ-कृत्-गुणवचनेन अर्थशब्देन, हीन-छिन्न-भिन्न-रहित-शून्य-युक्त-रचित-दग्ध-हृत-विद्ध-दंष्ट्र-आवृत-प्रणीत्-आच्छन्न-सदृश-सम-पूर्व-कलह-मिश्रित-सहितादिभिश्च तृतीयान्तं पूर्वपदं मस्यते। अर्थात् अत्रापि पदद्वयं भवति, पूर्वपदं तृतीयान्तं भवति परम् उत्तरपदं प्रधानं भवति।

| समस्तं पदम् | - | विग्रहवाक्यम् |
|---|---|---|
| पित्रा युक्त | - | पितृयुक्त: |
| सर्पण दष्टः | - | सर्पदष्ट: |
| शरेण विद्धः | - | शरविद्ध: |
| अग्निना दग्धः | - | अग्निदग्ध: |
| धनेन हीनः | - | धनहीन: |
| विद्यया हीनः | - | विद्याहीन: |

**चतुर्थी तत्पुरुष:**

तादर्थ्यार्थेबलि-हित-सुख-रहितादिसुबन्तपदै:सहचतुर्थन्तपदस्य समास:चतुर्थीतत्पुरूषसमास: भवति।

| समस्तं पदम् | - | विग्रहवाक्यम् |
|---|---|---|
| भूताय बलिः | - | भूतबलि: |

दानाय पात्रम् - दानपात्रम्

यूपाय दारु - यूपदारु

स्नानाय इदम् - स्नानार्थम्

तस्मै इदम् - तदर्थम्

**पञ्चमी तत्पुरुष:**

पञ्चमी भयेन। अर्थात् भयादिसुबन्तपदै: सह पञ्चम्यन्तपदस्य समसनं पञ्चमी तत्पुरुषसमास: भवति।

समस्तं पदम् - विग्रहवाक्यम्

चौरात्भयम् - चौरभयम्

रोगात्मुक्तः - रोगमुक्त:

अश्वात्पतितः - अश्वपतित:

स्वर्गात्पतितः - स्वर्गपतित:

सिंहात्भीतः - सिंहभीत:

**षष्ठी तत्पुरुष:**

स्वस्वामिभावादिवाचकेन षष्ठ्यन्तपदेन सह सुबन्तपदं समस्यते । अर्थात् अत्र समर्थ: पदविधि: इति नियमेन सुबन्तेन सह षष्ठ्यन्तपदस्य समास: भवति।

समस्तं पदम् - विग्रहवाक्यम्

राज्ञः पुरुषः - राजपुरुष:

देवानां पतिः - देवपति:

नराणां पतिः - नरपति:

देवस्य पूजा - देवपूजा

सुखस्य भोगः - सुखभोग:

**सप्तमी तत्पुरुष:**

सप्तमी शौण्डै:। अर्थात् शौण्ड-धूर्त्त-कित्व-प्रवीण-संवीत-पटु-पण्डित-कुषल-निपुण-सिद्ध-शुष्कपक्वादिभि: सुबन्तै: सह सप्तम्यन्तं पदं समस्यते यत्र तत् सप्तमीतत्पुरूष:।

समस्तं पदम् - विग्रहवाक्यम्

युद्धे निपुणः - युद्धनिपुण:

कार्ये कुशलः - कार्यकुशल:

शस्त्रे प्रवीणः - शास्त्रप्रवीण:

जले मग्नः - जलमग्न:

सभायां पण्डितः - सभापण्डित:

**नञ्तत्पुरुष:**

यत्र निषेधार्थबोधाय न,अन, अ, पदानां प्रयोग: भवति तत्र नञ् समास: भवति। यदि पूर्ववर्ण: व्यंजनवर्ण: भवति तर्हि अ एवं स्वरवर्ण: भवति तर्हि अन इत्यस्य प्रयोग: भवति। कदाचित् न

इत्यस्यापि प्रयोग: भवति।

| समस्तं पदम् | - | विग्रहवाक्यम् |
|---|---|---|
| न धार्मिकः | - | अधार्मिक: |
| न सुखम् | - | असुखम् |
| न आदिः | - | अनादि: |
| न सत्यम् | - | असत्यम् |

**उपपदसमास:**

अस्मिन् समासे उत्तरपदं क्रिया निर्मितं भवति , क्रियाया: लघुरूपं प्रयज्यते ।

**उदाहरणानि-**

| समस्तं पदम् | - | विग्रहवाक्यम् |
|---|---|---|
| स्वर्णं करोति इति | - | स्वर्णकार: |
| जलं ददाति इति | - | जलद: |
| न गच्छति इति | - | नग: |
| पाठं करोति इति | - | पाठक: |
| नीरे जायते इति | - | नीरजम् |
| धुरं धारयति इति | - | धुरंधर: |

**तत्पुरुष समास के दो ओर भी भेद है**

(i) समानाधिकरण तत्पुरुष अर्थात् (कर्मधारय समास)

**(2) द्विगु समास।**

(i) कर्मधारय समास:

कर्मधारयसमासे पदद्वयं भवति, परम् उभयो: पदयो: लिंगम्, वचनं, विभक्तिश्च समाना भवति। अत्र विशेष्य-विशेषणयोर्मध्ये, उपमान-उपमेययोर्मध्ये च समास: भवति ।

| कर्मधारय समास | - | (विशेषण विशेष्य) |
|---|---|---|
| विग्रहवाक्यम् | - | समस्तं पदम् |
| नीलम् उत्पलम् | - | नीलोत्पलम् |
| विशालः वृक्षः | - | विशालवृक्षः |
| मधुरं फलम् | - | मधुरफलम् |
| कुत्सितः राजा | - | कुराजा |
| सुन्दरः पुरुषः | - | सुपुरुषः |
| महान् च असौ राजा | - | महाराजः |

**कर्मधारय:(उपमान उपमेय)**

| विग्रहवाक्यम् | - | समस्तं पदम् |
|---|---|---|
| घन इव श्यामः | - | घनश्यामः |
| कमलम्इव मुखम् | - | कमलमुखम् |

चन्द्र इव मुखम् - चन्द्रमुखम्

नरः सिंह इव - नरसिंहः

**कर्मधारय: (उभयपद-विशेषण)**

विग्रहवाक्यम् - समस्तं पदम्

शीतं च उष्णम् - शीतोष्णम्

रक्तश्च पीतः - रक्तपीतः

आदौ सुप्तः पश्चादुत्थितः - सुप्तोत्थितः

**ii) द्विगु समास:**

**संख्यापूर्वो द्विगु:**

कर्मधारयसमास्य पूर्वपदं यदा संख्यावाचकं भवति तदा द्विगुसमास: भवति।

विग्रहवाक्यम् - समस्तं पदम्

सप्तानां दिनानां समाहारः - सप्तदिनम्

पञ्चानां पात्राणां समाहारः - पञ्चपात्रम्

त्रयाणां लोकानां समाहारः - त्रिलोकी

पञ्चानां वटानां समाहारः - पञ्चवटी

अष्टानां अध्यायानां समाहारः - अष्टाध्यायी

**3. द्वंद्व समास:**

अनेकं सुबन्तं 'च' अर्थे वर्तमाने वा समस्यते , स द्वंद्व: ।जिस समस्त पद में दोनों पदों की प्रधानता होती है वहाँ द्वंद्व समास होता है।इसके विग्रह में 'च' का प्रयोग होता है, जैसे लवश्च कुशश्च = लवकुशौ।यहाँ जितनी प्रधानता 'लव' की है उतनी ही प्रधानता 'कुश' की भी है। द्वंद्वसमास के दो रूप माने गए है - (1) इतरेतर द्वंद्व (2) समाहार द्वंद्व (i) इतरेतर द्वंद्व जिस समस्त पद में दोनों पदों का अर्थ अलग-अलगहोता है, उसे इतरेतर द्वंद्व कहते है।

विग्रहवाक्यम् - समस्तं पदम्

पार्वती च परमेश्वरश्च - पार्वतीपरमेश्वरौ

रामश्च कृष्णश्च - रामकृष्णौ

धर्मश्च अर्थश्च कामश्च मोक्षश्च - धर्मार्थकाममोक्षाः

सीता च रामश्च - सीतारामौ

धनञ्च जनश्च यौवनञ्च - धनजनयौवनानि

2) समाहार द्वंद्व:– अत्र समूहस्य प्रधानता भवति , बहूनां वस्तूनां समाहार: भवति।

उदाहरणानि

आहारश्च निद्रा च भयं च इति, एतेषां समाहार = आहारनिद्राभयम्

पाणी च पादौ च = पाणिपादम्

यवाश्च चणकाश्च = यवचणकम्

पुत्रश्च पौत्रश्च = पुत्रपौत्रम्

**4. बहुव्रीहि समास:**

अनेक प्रथमान्तम् अन्यस्यार्थे वर्तमानं वा समस्यते स बहुब्रीहिः।

जिस समास में पूर्व तथा उत्तर दोनों पद प्रधान न होकर किसी अन्य पद कीप्रधानता होती है, उसे बहुब्रीहि समास कहते है!विग्रह करते समय इसमें 'यस्य सः' आदि लगाया जाता है]

विग्रहवाक्यम् - समस्तं पदम्

महान्तौ बाहु यस्य सः - महाबाहुः (विष्णुः)

दश आननानि यस्य सः - दशाननः (रावणः)

पीतम् अम्बरम् यस्य सः - पीताम्बरः (कृष्णः)

चत्वारि मुखानि यस्य सः - चतुर्मुखः (ब्रहमा)

चक्रं पाणौ यस्य सः - चक्रपाणिः (विष्णुः)

**पाठ्यपुस्तकात् परीक्षायैमहत्वपूर्णानि उदाहरणानि-**

| **विग्रहवाक्यम्** | **समस्तं पदम्** |
|---|---|
| अक्षराणां व्यक्ति: | अक्षरव्यक्ति: |
| न उद्वेगकरम् | अनुद्वेगकरम् |
| न पूर्व: | अपूर्व: |
| अर्थस्य विज्ञानम् | अर्थविज्ञानम् |
| धियो गुणा: | धीगुणा: |
| सर्वं ददाति इति | सर्वदा |
| आशया अन्वित: | आशान्वित: |
| जनकल्याणस्य कर्मसु | जनकल्याणकर्मसु |
| नीलं च तत् उत्पलम् | नीलोत्पलम् |
| लोकस्य यात्रा | लोकयात्रा |
| शास्त्रेषु पारंगत: | शास्त्रपारंगत: |
| न मेध्यम् | अमेध्यम् |
| न ऋतम् | अनृतम् |
| काकस्य चेष्टा | काकचेष्टा |
| स्थिता प्रज्ञा यस्य स: | स्थितप्रज्ञ: |
| अहश्च निशा च तयो: समाहार: | अहर्निशम् |
| कलहै: अन्त: येषां तानि | कलहान्तानि |

| मेषाणां यूथ: तम् | मेषयूथम् |
|---|---|
| राज्ञ: आदेशं तम् | राजादेशम् |
| हयानां शालाम् | यशालाम् |
| प्राणानां त्राणाय | प्राणत्राणाय |
| महान्तौ बाहू यस्य | महाबाहो |
| सहस्त्रम् अंशव: यस्य स: | सहस्त्रांशु: |
| न आसक्ता | अनासक्ता |
| दग्धं मानसं यस्य स: | दग्धमानस: |
| दैवस्य गति: | दैवगति: |
| विद्यया परांगमुख: | विद्यापरांगमुख: |
| न कातर: | अकातर: |
| न वक्रता | अवक्रता |
| क्लेशानां परम्परा | क्लेशपरम्परा |
| धर्मं प्रददाति इति ताम् | धर्मप्रदाम् |
| वाचि पटु: | वाक्पटु: |
| विमूढा धी: यस्य स: | विमूढधी: |
| पर्यटनस्य अधिकारी | पर्यटनाधिकारी |
| प्रक्षेपकस्य यंत्रेण | प्रक्षेपकयंत्रेण |
| शाले: चूर्णम् | शालिचूर्णम् |
| सेतो: निर्माणम् | सेतुनिर्माणम् |
| मदेन उद्धता: | मदोद्धता: |
| मेषाणां मध्ये | मेषमध्ये |
| देवानाम् अधिपति: | देवाधिपति: |

**अभ्यासप्रश्ना:-**

1. .**<u>मदोद्धता:</u>** कपय: प्रहस्य अवदन्।

(क)मदेन उद्धता: (ग) मदस्य उद्धता:

(ख)मदात् उद्धता: (घ) मदाय उद्धता:

2. **<u>मेषाणां मध्ये</u>** एक: मेष: रसनास्वादलुब्ध: आसीत् ।

(क)मेषान्मध्ये

(ख)मेषमध्ये

(ग) मेषस्यमध्ये

(घ) मेषामध्ये

3. **<u>त्यागसमं</u>** सुखं नास्ति।

(क) त्यागै: समम्

(ख) त्यागात् समम्

(ग) त्यागेन समम्

(घ) त्यागस्य समम्

4. शक्र: **<u>आशान्वित:</u>** राज्ञ: समीपे आगत:।

(क) आशया अन्वित:

(ख) आशय अन्वित:

(ग) आशाया: अन्वित:

(घ) आशा अन्वित:

5. अहं **<u>देवाधिपति:</u>** शक्र: अस्मि।

(क) देवाय अधिपति:

(ख) देवाभ्याम् अधिपति:

(ग) देवात् अधिपति:

(घ) देवानाम् अधिपति:

6.नृप: नगरं परित: **<u>दानशाला:</u>** अकारयत्।

(क) दानस्य शाला:

(ख) दानाय शाला:

(ग) दानात् शाला:

(घ) दाने शाला

7.कीदृशी इयं मम **<u>क्लेशपरम्परा</u>**!

(क) क्लेशस्य परम्परा

(ख) क्लेशाय परम्परा

(ग)क्लेशानां परम्परा

(घ) क्लेशात् परम्परा

8.**<u>बकस्य च हंसस्य</u>** च रूपम् एकमेवं भवति।

(क) बकयो: हंसयो

(ख) हंसबकयो:

(ग) बकहंसयो:

(घ)बकहंस:

9. विप्र: **<u>देवानाम् राजा</u>** शक्र: आसीत्।

(क) देवराजा

(ख) देवराज:

(ग) देवताराजा

(घ) देवाराजा

10. षडेते **<u>पाठकगुणा</u>**: सन्ति।

(क) पाठकस्यगुणा:

(ख) पाठकेगुणा:

(ग)पाठकात् गुणा:

(घ)पाठं करोति य: स:

**<u>11. विद्यासमं</u>** चक्षु: नास्ति।

(क) विद्येन सम

(ख) विद्याया: सम्

(ग) विद्यया समम्

(घ) विद्यायै सम्

**<u>12.शारदा</u>** सर्वदा अस्ति।

(क) सर्वं ददाति इति

(ख)सर्वा दत्त: इति

(ग) सर्वं दत्ता इति

(घ) सर्वां ददाति

**<u>13. अनुद्वेगकरं</u>** वाक्यमेव वाङ्मयं तप: उच्यते।

(क) न अनुद्वेगकरम्

(ख) अननुद्वेगकरम्

(ग) न उद्वेगकरम्

(घ) उद्वेगकरम् न

14.गुरु: **<u>तत्वज्ञानं</u>** जानाति।

(क) तत्वानां ज्ञानम्

(ख) तत्वाय ज्ञानम्

(ग)तत्वम् ज्ञानम्

(घ)तत्वत: ज्ञानम्

15.तस्य वचनम् **<u>अश्रद्धेयम्</u>** अस्ति।

(क) न अश्रद्धेयम्

(ख) श्रद्धेयं न

(ग) न श्रद्धेयम्

(घ) अनश्रद्धेयम्

16. **<u>धीगुणा:</u>** अष्ट सन्ति।

(क) धियात् गुणा:

(ख) धीयस्य गुणा:

(ग)धिय: गुणा:

(घ)धिया: गुणा:

17.एष: कलस्य **<u>विनाशकारणं</u>** भविष्यति।

(क) विनाशं कारणम्

(ख) विनाशात् कारणम्

(ग) विनाशेन कारणम्

(घ) विनाशस्य कारणम्

18.स: **<u>यूथप:</u>** सर्वान् कपीन् आहूय रहसि अवदत्।

(क) यूथानां पिबति

(ख) यूथस्य पति:

(ग) यूथं पाति इति

(घ) यूथप: पति:

19.राजगृहे एकं **<u>बालवाहनयोग्यं</u>** मेषयूथम् आसीत्।

(क) मेषं यूथम्

(ख)मेषो यूथम्

(ग) मेषाणां यूथम्

(घ) मेषाणां यूथाना

20.**<u>सूपकारा:</u>** भोजनं पचन्ति।

(क) सूपं कुर्वन्ति इति ते | (ग) सूपानाम् कुर्वन्ति
(ख) सूपं करोति इति | (घ) सूपकारा: कुर्वन्ति इति ते

21.**राजगृहे** एकं वानरयूथम् अपि आसीत्।
(क) राजस्य गृहे | (ग) राजाय गृहे
(ख) राज्ञ: गृहे | (घ) राज्ञे गृहे

22.**सत्यसमं** तप: नास्ति।
(क) सत्यात् समम् | (ग) सत्याय समम्
(ख) सत्येन समम् | (घ) सत्यस्य समम्

23.**पिक: च काक: च तयो:** को भेद:?
(क)पिककाकयो: | (ग) पिककाकौ
(ख)पिककाका: | (घ) पिककाक:

24.**पञ्चानां वटानां समाहार:** इति स्थानं रम्यं आसीत्।
(क) पञ्चावटी | (ग) पञ्चवटा
(ख) पञ्चवटी | (घ) पञ्चवटा

25.क्षेत्रे **सुवर्णेन पूरित:** कलश: विद्यते।
(क) सुवर्णपूरिता: | (ग) सुवर्णपूरिता
(ख) सुवर्णपूरित: | (घ) सुवर्णपूरित

26.**दुष्टा बुद्धि: यस्य स:** नगरं प्रति प्राचलत्।
(क) दुष्टाबुद्धि: | (ग) दुष्टबुद्धौ
(ख) दुष्टबुद्धि: | (घ) दुष्टबिद्धि:

27. पिक: **आम्रस्य वृक्षे** स्थित्वा पञ्चमस्वरेण गायति।
(क) आम्रवृक्षे | (ग) आम्रवृक्षा:
(ख) आम्रवृक्ष: | (घ) आम्रवृक्षम्

28. सर्वेषाम् एव महत्त्वं विद्यते **समयम् अनतिक्रम्य।**
(क) यथासमय: | (ग) यथासमय
(ख) यथासमयम् | (घ) समयम् अति

29.कथमत्र **<u>नते च उन्नते च</u>** विषमे मार्गे क्रीडथ?

(क) नतोन्नत:

(ख) नतुन्नते

(ग) नतोन्नते

(घ) नतौन्नते

30.**<u>अक्षाराणाम् व्यक्ति:</u>** पाठकस्य गुण: वर्तते।

(क) अक्षरव्यक्ति:

(ख) अक्षराव्यक्ति:

(ग) अक्षराणाम् व्यक्ति:

(घ) अक्षरम व्यक्ति:

31.**<u>अह: च निशा च</u>** किं ध्यातव्यम्?

(क) आहर्निशम्

(ख) अहर्निशम्

(ग) अहर्निशाम्

(घ) अर्हनिशाम्

32.किं न श्रुतम् **<u>काकानाम् चेष्टा</u>**।

(क) काकचेष्टा

(ख) काकचेष्टा:

(ग) काकचेष्ट:

(घ) काकचेष्टाम्

33.**<u>वृद्धान् उपसेवितुम् शीलम् यस्य स:</u>** नृप: दानशील: आसीत्।

(क) वृद्धोपसेवी

(ख) वृद्धौपसेवी

(ग) वृद्धोपसेवि

(घ) वृद्धोपसेवा

34.**<u>अर्थस्य विज्ञानम्</u>** आदाय: धीगुणा: सन्ति।

(क) अर्थस्यविज्ञानम्

(ख) अर्थविज्ञानस्य

(ग) अर्थविज्ञानम्

(घ) अर्थाविज्ञा

35.नास्ति **<u>विद्यया समम्</u>** चक्षु:।

(क) विद्यासम:

(ख) विद्यासमम्

(ग) विद्यायासमम्

(घ) विद्ययासम्

**उत्तराणि-**

1.(क)मदेन उद्धता:
2.(ख) मेषमध्ये
3.(ग) त्यागेन समम्
4.(क) आशया अन्वित:
5.(घ) देवानाम् अधिपति:
6.(ख) दानाय शाला:
7.(ग)क्लेशानां परम्परा
8.(ग) बकहंसयो:
9.(ख) देवराज:
10. (क) पाठकस्य गुणा:
11.(ग) विद्यया समम्
12. (क) सर्वं ददाति इति
13. (ग) न उद्वेगकरम्
14. (क) तत्वानां ज्ञानम्
15. (ग) न श्रद्धेयम्
16. (ग)धिय: गुणा:
17. (घ) विनाशस्य कारणम्
18.(ख) यूथस्य पति:
19.(ग) मेषाणां यूथम्
20.(क) सूपं कुर्वन्ति इति ते
21.(ख) राज्ञ: गृहे
22.(ख) सत्येन समम्
23.(क)पिककाकयो:
24.(ख) पञ्चवटी
25.(ख) सुवर्णपूरित:
26.(ख) दुष्टबुद्धि:
27.(क) आम्रवृक्षे
28.(ख) यथासमयम्
29.(ग) नतोन्नते
30. (क) अक्षरव्यक्ति:
31. (ख) अहर्निशम्
32. (क) काकचेष्टा
33.(क) वृद्धोपसेवी
34. (ग) अर्थविज्ञानम्
35. (ख) विद्यासमम्

## प्रत्यया:

______प्रत्यया: पदान्ते प्रयुज्यन्ते | अस्माभि: द्विविधा प्रत्यया: पठनीया: |

1) तद्धितप्रत्यया: (तद्धितप्रत्यया: मूलशब्दै: सह प्रयुज्यन्ते | )

2) स्त्रीप्रत्यया: ( शब्दानां स्त्रीलिङ्गरूपनिर्माणाय मूलशब्दै: सह स्त्रीप्रत्यया: प्रयुज्यन्ते | )

**तद्धितप्रत्यया:**

**1) मतुप् प्रत्यय: (तदस्ति अस्मिन् - इत्यर्थे )**

मतुप् प्रत्यय: मूलशब्दै: सह प्रयुज्यन्ते | अस्मिन् प्रत्यये 'मत्' इति अवशिष्यते | यदा अकारान्त/आकारान्तशब्दै: सह यदा मतुप् प्रत्ययस्य योग: भवति तदा 'मत्' इत्यस्यस्थाने 'वत्' इति आदेश: आगच्छति | अन्यत्र 'मत्' इत्येव तिष्ठति | उदाहरणानि पश्याम: |

यथा:- धन + मतुप् = धनवत्
अंशु + मतुप् = अंशुमत्
मति + मतुप् = मतिमत्

**पुल्लिङ्गे** रूपाणि 'भवत्' शब्दवत् भवन्ति | ( भवान् - भवंतौ - भवंत: )

| **शब्द: + मतुप्** | **रूपम्** | **पुल्लिङ्गे रूपाणि** | | |
|---|---|---|---|---|
| | | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
| धन + मतुप् | धनवत् | धनवान् | धनवन्तौ | धनवन्त: |
| मति + मतुप् | मतिमत् | मतिमान् | मतिमन्तौ | मतिमन्त: |
| अंशु + मतुप् | अंशुवत् | अंशुमान् | अंशुमन्तौ | अंशुमन्त: |

| गुण + मतुप् | गुणवत् | गुणवान् | गुणवन्तौ | गुणवन्त: |
|---|---|---|---|---|
| बुद्धि + मतुप् | बुद्धिमत् | बुद्धिमान् | बुद्धिमन्तौ | बुद्धिमन्त: |
| क्षमा + मतुप् | क्षमावत् | क्षमावान् | क्षमावन्तौ | क्षमावन्त: |

---

**स्त्रीलिङ्गे** रूपाणि 'नदी' शब्दवत् भवन्ति | (नदी - नद्यौ- नद्य:)

| **शब्द: + मतुप्** | **रूपम्** | **स्त्रीलिङ्गे रूपाणि** | | |
|---|---|---|---|---|
| | | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
| धन + मतुप् | धनवत् | धनवती | धनवत्यौ | धनवत्य: |
| मति + मतुप् | मतिमत् | मतिमती | मतिमत्यौ | मतिमत्य: |
| अंशु + मतुप् | अंशुवत् | अंशुमती | अंशुमत्यौ | अंशुमत्य: |
| गुण + मतुप् | गुणवत् | गुणवती | गुणवत्यौ | गुणवत्य: |
| बुद्धि + मतुप् | बुद्धिमत् | बुद्धिमती | बुद्धिमत्यौ | बुद्धिमत्य: |
| क्षमा + मतुप् | क्षमावत् | क्षमावती | क्षमावत्यौ | क्षमावत्य: |

**नपुंसकलिङ्गे** रूपाणि 'जगत्' शब्दवत् भवन्ति | (जगत् - जगती - जगन्ति )

| **शब्द: + मतुप्** | **रूपम्** | **नपुंसकलिङ्गेरूपाणि** | | |
|---|---|---|---|---|
| | | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
| धन + मतुप् | धनवत् | धनवत् | धनवती | धनवन्ति |
| मति + मतुप् | मतिमत् | मतिमत् | मतिमती | मतिमन्ति |
| अंशु + मतुप् | अंशुवत् | अंशुवत् | अंशुमती | अंशुमन्ति |
| गुण + मतुप् | गुणवत् | गुणवत् | गुणवती | गुणवन्ति |
| बुद्धि + मतुप् | बुद्धिमत् | बुद्धिमत् | बुद्धिमती | बुद्धिमन्ति |
| क्षमा + मतुप् | क्षमावत् | क्षमावत् | क्षमावती | क्षमावन्ति |

**वाक्येप्रयोग: :-**

1. नारी ----------------- (क्षमा + मतुप्) भवति | - क्षमावती

   (अत्र नारी विशेष्य पदं भवति | अत: मतुप्प्रत्ययान्तं रूपं स्त्रीलिङ्गे एकवचने च स्यात्)

2. भारतस्य सैनिका: ------------------(शक्ति + मतुप्) भवन्ति | - शक्तिमन्त:

(अत्रसैनिका: विशेष्यपदं भवति | अत: मतुप्प्रत्ययान्तं रूपं पुल्लिङ्गे बहुवचने च स्यात्)

3. वृक्षस्य पुष्पाणि --------------- ( गन्ध + मतुप् ) सन्ति | - गन्धवन्ति

(अत्र पुष्पाणि विशेष्यपदम् भवति | अत: मतुप् प्रत्ययान्तं रूपं नपुंसकलिङ्गे बहुवचने च स्यात्)

4. आम्रम् ------------- ( मधुर + मतुप् ) फलम् अस्ति | - मधुरवत्

(अत्र आम्रम् विशेष्यपदम् भवति | अत: मतुप् प्रत्ययान्तं रूपं नपुंसकलिङ्गे एकवचने च स्यात्)

**2) ठक् प्रत्यय: (संबंध - अर्थे)**

ठक् प्रत्यय: अपि मूलशब्देन सह प्रयुज्यते | ठक् प्रत्ययस्य स्थाने इक इति आगच्छति | मूलशब्दस्य अन्तिमस्वरस्य इक आदेश: भवति | ठक् प्रत्ययस्य प्रयोगे मूलशब्दस्य प्रथमस्वरस्य वृध्दि-आदेश: अपि भवति |

**यथा -**

| **वर्ण:** | | **वृध्दिवर्ण:** |
|---|---|---|
| अ | - | आ |
| इ/ई | - | ऐ |
| उ/ऊ | - | औ |

**उदाहरणम् :-**

समाज + ठक् = समाज + इक

= सामाज + इक

= सामाजिक

(पुल्लिङ्गे - सामाजिक: / स्त्रीलिङ्गे -सामाजिकी / नपुंसकलिङ्गे - सामाजिकं)

(रूपाणि पुल्लिङ्गे बालक-शब्दवत् / स्त्रीलिङ्गे नदी - शब्दवत् / नपुंसकलिङ्गे-पुष्प - शब्दवत् च सन्ति | )

| **शब्द: + ठक्** | **रूपम्** | **लिङ्गेषु रूपाणि** | | |
|---|---|---|---|---|
| | | **पुल्लिङ्गे** | **स्त्रीलिङ्गे** | **नपुंसकलिङ्गे** |
| वाच + ठक् | वाचिक | वाचिक: | वाचिकी | वाचिकम् |
| भूत + ठक् | भौतिक | भौतिक: | भौतिकी | भौतिकम् |
| शरीर + ठक् | शारीरिक | शारीरिक: | शारीरिकी | शारीरिकम् |
| धर्म + ठक् | धार्मिक | धार्मिक: | धार्मिकी | धार्मिकम् |
| कर्म + ठक् | कार्मिक | कार्मिक: | कार्मिकी | कार्मिकम् |
| नगर + ठक् | नागरिक | नागरिक: | नागरिकी | नागरिकम् |

**वाक्ये प्रयोगे:**

1. स्वतंत्रता अस्माकं मूल् + ठक् अधिकार: अस्ति | - मौलिक:
   (अत्र अधिकार: विशेष्यपदम् भवति | अत: ठक् प्रत्ययान्तं रूपं पुल्लिङ्गे एकवचने च स्यात्)
2. अघ मम साप्ताह + ठक् अवकाश: अस्ति | - साप्ताहिक
   (अत्र अवकाश: विशेष्यपदम् भवति | अत: ठक् प्रत्ययान्तं रूपं पुल्लिङ्गे एकवचने च स्यात्)
3. नगर + ठक् संस्कृति: प्रकृते: नाशं करोति | - नागरिकी
   (अत्र संस्कृति विशेष्यपदम् भवति | अत: ठक् प्रत्ययान्तं रूपं स्त्रीलिङ्गे एकवचने च स्यात्)
4. परोपकार: सर्वेषां प्रथम + ठक् कर्तव्य: वर्तते | - प्राथमिक:
   (अत्र कर्तव्य: विशेष्यपदम् भवति | अत: ठक् प्रत्ययान्तं रूपं पुल्लिङ्गे एकवचने च स्यात्)

**3) त्व प्रत्यय: (धर्मार्थे भाववाचक: प्रत्यय: )**

धर्मार्थे भाववाचकशब्दानां निर्माणार्थं मूलशब्दै: सह 'त्व' प्रत्यय: प्रयुज्यते | त्व - प्रत्ययान्तम् पदम् सर्वदाम् नपुंसकलिङ्गे भवति | पदस्य अन्ते 'त्वं' इति भवति |

यथा :-

| | | | | |
|---|---|---|---|---|
| मानव | + | त्व | = | मानवत्वं |
| पशु | + | त्व | = | पशुत्वं |
| महत् | + | त्व | = | महत्त्वं |
| लघु | + | त्व | = | लघुत्वं |
| मनुष्य | + | त्व | = | मनुष्यत्वं |

**वाक्ये प्रयोगे: :-**

1) -------------- ( नर + त्व ) दुर्लभं लोके | नरत्वम्
2) ------------- ( मनुष्य + त्व ) सर्वदा सर्वत्र पालनीयम् | मनुष्यत्वं
3) ------------- ( स्त्री + त्व ) सर्वदा पूज्यते | स्त्रीत्वम्
4) स्वामीविवेकानान्दस्य -------------- (महत् + त्व ) विश्वप्रसिध्दम् भवति | महत्त्वं

**4) तल् प्रत्यय: (धर्मार्थे भाववाचक: प्रत्यय: )**

धर्मार्थे भाववाचकशब्दानां निर्माणार्थं मूलशब्दै: सह **'तल्'** प्रत्यय: प्रयुज्यते | **तल्** - प्रत्ययान्तम् पदम् सर्वदाम् स्त्रीलिङ्गे भवति | **तल्** प्रत्ययस्य स्थाने 'ता' इति आगच्छति |

**यथा:-**

मानव + तल् = मानवता　　　　लघु + तल् = लघुता
मूर्ख + तल् = मूर्खता　　　　गुरु + तल् = गुरुता
मित्र + तल् = मित्रता

**वाक्ये प्रयोग: :-**

1. **सम + तल्** सदैव पालनीया अस्ति | समता
2. प्रकृते: **रमणीय + तल्** मनोरमा अस्ति | रमणीयता
3. सर्वे **सम्पन्न + तल्** इच्छन्ति | सम्पन्नतां

**5) टाप् प्रत्यय: (स्त्रीप्रत्यय:)**

अकारांतशब्दानां स्त्रीलिङ्गपदनिर्माणाय 'टाप्' प्रत्यये 'आ' इति अवशिष्यते | शब्दानां अन्ते यदि 'अक' इति भवति तदा 'टाप्' प्रत्ययस्य योगे 'अक' इत्यस्य स्थाने 'इका' इति परिवर्तनम् भवति |

**यथा:-**

| | |
|---|---|
| बाल + टाप् = बाला | गज + टाप् = गजा |
| निर्मल + टाप् = निर्मला | छात्र + टाप् = छात्रा |
| अज + टाप् = अजा | नायक + टाप् = नायिका |

**वाक्ये प्रयोग:**

1) ------------ (बालक + टाप्) नृत्यम् करोति | बालिका

2) -------------- (छात्र + टाप् ) विघालयं गच्छति | छात्रा

3) -------------- (नायक + टाप् ) अभिनयम् करोति | नायिका

4) ------------- (अज + टाप् ) तृणं चरति | अजा

**6) ङीप् प्रत्यय: (स्त्रीप्रत्यय:)**

ईकारान्तस्त्रीलिङ्गपदनिर्माणाय 'ङीप्' प्रत्यय:' प्रयुज्यते | 'ङीप्' प्रत्यये 'ई' अति अवशिष्यते |

**यथा :-**

नद + ङीप् = नदी मुख + ङीप् = मुखी

देव + ङीप् = देवी भवत् + ङीप् = भवती

श्रीमत् + ङीप् = श्रीमती

**वाक्ये प्रयोग:**

1. पर्वतेभ्य: **<u>नद + ङीप्</u>** प्रवहन्ति | - नद्य:
2. **<u>मृग + ङीप्</u>** मृगेण सह क्रीडति | - मृगी
3. **<u>तपस्विन् + ङीप्</u>** तप: करोति | - तपस्विनी
4. बुद्धि: **<u>बलवत् + ङीप्</u>** सदा | - बलवती

## वाच्य-परिवर्तनम्

क्रिया के कथन के प्रकार को वाच्य कहते हैं | संस्कृत में वाच्य तीन तरह के होते हैं-

**1. कर्तृवाच्यः -**

इस वाच्य में कर्ता प्रधान होता हैं तथा क्रिया कर्ता के अनुसार प्रयोग होती हैं | इसके कर्त्ता में प्रथमा विभक्ति तथा कर्म में द्वितीया विभक्ति का प्रयोग होता हैं | इस वाच्यका सूत्र हैं:- 1-2-1

**यथा -**राम: गृहं गच्छति |

इस वाक्य में 'राम' कर्त्ता और 'गृहं' कर्म हैं | इसकी क्रिया 'गच्छति' कर्त्ता 'राम' के अनुसार एकवचन की हैं |

सैनिक: देशं रक्षति |

इस वाक्य में 'सैनिक:' कर्त्ता और 'देशं' कर्म हैं | तथा 'रक्षति' क्रिया हैं |

**2. कर्मवाच्य -**

कर्मवाच्य में कर्म की प्रधानता होती है, अत: कर्म में प्रथमा तथा कर्त्ता में तृतीया विभक्ति का प्रयोग होता है | यहाँ क्रिया का प्रयोग कर्म के अनुसार होता है | जिस लिङ्ग, पुरुष तथा वचन में कर्म होता है, उसी लिङ्ग, पुरुष तथा वचन में क्रिया का प्रयोग होता है | इस वाच्य का सूत्र हैं:- 3 - 1 --1

**यथा -** रामेण गृहं गम्यते |

विघार्थिना पाठ: पठ्यते |

मया चित्रे दृश्यते |

इस वाक्यों में क्रमश: गृहं तथा पाठ: कर्म हैं | अत: वाक्यों में कर्म के एकवचन के अनुसार क्रिया भी एकवचन में ही प्रयोग की हैं |

**3. भाववाच्य -**

इस वाच्य के कर्ता में तृतीया विभक्ति का प्रयोग होता है | भाववाच्य में क्रिया का अर्थ या भाव ही प्रधान होता है, क्रिया प्रथम पुरुष एकवचन में ही प्रयुक्त होती है | भले ही कर्ता एकवचन में हो या बहुवचन में | इस वाच्य का सूत्र हैं:- 3 -1

**यथा -** ( मया/त्वया/युवाभ्यां/आवाभ्यां/अस्माभि:/तै:) सुप्यते |

वाच्य परिवर्तन के नियम - कर्तृवाच्यः में वर्तमानकाल की क्रियाओं को यदि कर्मवाच्य में बदला जाता है तो क्रियाओं में इस प्रकार बदलाव होता हैं |यथा - कर्तृवाच्यः की क्रिया -- कर्मवाच्य / भाववाच्य की

लिखति - लिख्यते
पठति - पठ्यते
खादति - खाद्यते
भवति - भूयते
हसति - हस्यते
गच्छति - गम्यते

भूतकाल की क्रियाओं में कर्तृवाच्यः में जहाँ 'क्तवतु' प्रत्यय का प्रयोग होता हैं, वहाँ कर्मवाच्य में 'क्त' प्रत्यय का प्रयोग होता हैं- साथ-ही-साथ कर्ता में तृतीया विभक्ति का प्रयोग होता है|

**यथा -** स: फलानि खादितवान् | (कर्तृवाच्यः)

तेन फलानि खादितानि | (कर्मवाच्य)

**उदाहरण (कर्तृवाच्यः से कर्मवाच्य)**

1. देव: रामं पश्यति - देवेन राम: दृश्यते |
2. राम: पुस्तकं पठति- रामेण पुस्तकं पठ्यते |
3. अहं पत्रं लिखामि - मया पत्रं लिख्यते |
4. महिला घटे जलं नयति- महिलया घटे जलं नीयते |
5. लता गीतं गायति - लतया गीतं गीयते |
6. अहं चित्रं पश्यामि - मया चित्रं दृश्यते |
7. छात्रा: पुस्तकं पठन्ति - छात्रै: पुस्तकं पठ्यते |
8. कन्या: गीतं गायन्ति- कन्याभि: गीतं गीयते |
9. अहम् विघालयं गच्छामि- मया विघालयं गम्यते |
10.त्वं फले खादसि - त्वया फले खाद्येते |
11.राम: रावणं हन्ति - रामेण रावण: हन्यते |
12.सा पुष्पे स्पृश्यति - तया पुष्पे स्पृश्येते |
13.माता दुग्धं यच्छति - मात्रा दुग्धं दीयते |
14.ते गीतानि गायन्ति - तै: गीतानि गीयन्ते |
15.सूर्य: अत्र भासते - सूर्येण अत्र भास्यते |
16.त्वं ग्रामं गच्छसि - त्वया ग्राम: गम्यते |
17.देव: चित्रं पश्यति - देवेन चित्रं दृश्यते |
18.अहम् त्वां पश्यामि - मया त्वं दृश्यते |

**उदाहरण (कर्तृवाच्यः से भाववाच्य)**

1. बाल: हसति - बालै: हस्यते |
2. अहम् हसामि - मया हस्यते |
3. बालका: धावन्ति - बालकै: धाव्यते |
4. मृगा: धावन्ति - मृगैः धाव्यते |
5. जना: गृहे तिष्ठन्ति - जनैःगृहे स्थीयते |
6. विघाहीन: न शोभते - विघाहीनेन न शुभ्यते |
7. मयूर: नृत्यति - मयूरेण नृत्यते |
8. ते हसन्ति - तै: हस्यते |
9. त्वं हससि - त्वया हस्यते |

**उदाहरण (भाववाच्य से कर्तृवाच्यः)**

1. बालकेन क्रीड्यते - बालक: क्रीडति |
2. वानरै: स्थीयते - वानरा: कूर्दन्ति |
3. छात्रै: हस्यते - छात्रा: हसन्ति |

## प्रतिदर्श-अभ्यासप्रश्नाः

अधोलिखितेषु वाक्येषु वाच्य परिवर्तनं ि‌क्रयतां :-

1. मया ओदनं पच्यते |
2. मया प्रश्ना: पृच्छ्यन्ते |
3. सागीतां पठति |
4. दिनेश: चित्रं पश्यति |
5. बालेन दुग्धं पीयते |
6. अहं नगरं गच्छामि |
7. मया हस्यते |
8. गजा: जलं पिबन्ति |
9. विभा भोजनं करोति |
10. कन्या हसति |
11. साधुना ग्राम: गम्यते |
12. पुत्र: पितरं लेखं लिखति |
13. बाल: मातरं स्मरति |
14. वयं पत्राणि लिखाम: |
15. सूर्य: अत्र भासते |
16. बालका: क्रीडन्ति |
17. अहं मित्रं पत्रं लिखामि |
18. देव: कन्दुकेन क्रीडति |
19. त्वं कलमेन पत्रं लिखसि |
20. गुरु: शिष्याय पुस्तकं यच्छति|
21. अहं पत्रं पठामि |
22. त्वं किं करोषि ?
23. स: धनं लभते |
24. अहं गीतां पठामि |
25. भवान् किं वाञ्छति |
26. विघाहीन: न शोभते |
27. वृद्धा: कुत्र गच्छन्ति |
28. गगने विमानम् उड्डयति |
29. भिक्षुका: भोजनं याचन्ते |
30. कन्या पत्रं वाचयति |

## समय लेखनम्

प्रश्न पत्र में घड़ी में देखकर या अंको में लिखे समय को संस्कृत में शब्दों में लिखने के लिए आता है। अतः संस्कृत में समय ज्ञान की जानकारी अत्यंत आवश्यक है। समय ज्ञान के लिए सर्वप्रथम समय से सम्बन्धित शब्दावली को जान लेते हैं-

**समय से सम्बन्धित शब्दावली-**

घटिका- घड़ी

समयः- समय

वादनम्- बजे

होरा- घंटा

निमेषः- मिनट

क्षणम्- सेकेंड

सपाद- सवा

सार्ध- साढे

पादोन- पौने

अधिकम्- अधिक

न्यूनम् / ऊनम्- कम

**समयकाप्रयोग-**

1. पूर्णसमयः- पूरासमय
2. सपाद- सवा
3. सार्ध- साढे
4. पादोंन- पौने

## 1. पूर्णसमय-

1:00- एकवादनम्
2:00- द्विवादनम्
3:00- त्रिवादनम्
4:00- चतुर्वादनम्
5:00- पंचवादनम्
6:00- षड्वादनम्
7:00- सप्तवानम्
8:00- अष्टवादनम्
9:00- नववादनम्
10:00- दशवादनम्
11:00- एकादशवादनम्
12:00- द्वादशवादनम्

## 2. सपाद- सवा-

1:15- सपादएकवादनम्
2:15- सपादद्विवादनम्
3:15- सपादत्रिवादनम्
4:15- सपादचतुर्वादनम्
5:15- सपादपंचवादनम्
6:15- सपादषड्वादनम्
7:15- सपादसप्तवानम्
8:15- सपादअष्टवादनम्
9:15- सपादनववादनम्
10:15- सपाददशवादनम्
11:15- सपादएकादशवादनम्
12:15- सपादद्वादशवादनम्

## 3. सार्ध- साढे-

1:30- सार्धएकवादनम्
2:30- सार्धद्विवादनम्
3:30- सार्धत्रिवादनम्
4:30- सार्धचतुर्वादनम्
5:30- सार्धपंचवादनम्
6:00- सार्धषड्वादनम्
7:30- सार्धसप्तवानम्
8:30- सार्धअष्टवादनम्
9:30- सार्धनववादनम्
10:30- सार्धदशवादनम्
11:30- सार्धएकादशवादनम्
12:30- सार्धद्वादशवादनम्

4. पादोन- पौने-

12:45- पादोनएकवादनम्
1:45- पादोनद्विवादनम्
2:45- पादोनत्रिवादनम्
3:45- पादोनचतुर्वादनम्
4:45- पादोनपंचवादनम्
5:45- पादोनषड्वादनम्
6:45- पादोनसप्तवानम्
7:45- पादोनअष्टवादनम्
8:45- पादोननववादनम्
9:45- पादोनदशवादनम्
10:45- पादोनएकादशवादनम्
11:45- पादोनद्वादशवादनम्

**वादनम् और वादने का प्रयोग-**

**# यदि सामान्य समय पूछा गया हो तो वादनम् का प्रयोग होता है, जैसे-**

क: समय: ? (समय क्या हो रहा है)

एकवादनम्, द्विवादनम्, त्रिवादनम् आदि।

**# यदि समय रिक्तस्थान भरने के लिए पूछा गया हो तो "वादने" का प्रयोग होगा, जैसे-**

1. मोहन: .............विद्यालयं गच्छति। (8:00)
   मोहन: अष्टवादने विद्यालयं गच्छति।
2. लता ............. ग्रामं गच्छति। (5:00)
   लता पंचवादने ग्रामं गच्छति।
3. अहं ......... विद्यालयं गच्छामि। (7:30)
   अहं सार्धसप्तवादने विद्यालयं गच्छामि।
4. विवेकः ......... पत्रं लिखति। (3:45)
   विवेकः पादोन चतुर्वादनेपत्रं लिखति।
5. उमा .......... कार्यं करोति। (5:15)
   उमा सपाद पंचवादने कार्यं करोति।

**# अभ्यास के लिए समय के अन्य वाक्य-**

प्रश्न- अधोलिखित वाक्येषु अंकानां स्थाने उचित-संस्कृत समयं लिखतु-

1. रामः ............. भोजनं खादति। (12:00)
2. उमा .......... पुस्तकं पठति। (5:30)
3. सीता .......... खेलं खलति। (6:45)
4. उमेशः ............ चित्रं रचयति। (9:15)
5. महेशः ............ नगरं गच्छति। (8:39)
6. महिला ........... भोजनं पचति। (11:15)
7. अध्यापकः ........... पाठं पाठयति। (1:45)
8. अमर: ............ कार्यं करोति। (8:30)
9. अहं .......... गीतं गायामि। (4:45)
10. त्वं ............. गृहम् आगच्छति। (5:15)
11. उर्मिला ............ फलम् आनयति। (12:30)
12. देव: ........... कार्यालयं गच्छति। (11:45)

# अव्ययशब्दा:

**अव्यय :** अव्यय शब्द तीनों लिंगों, 7 विभक्तियों एवं तीनों वचनों में एकसमान ही होता है इसमें कोई भी परिवर्तन नहीं होता है।

भाषा में कुछ ऐसे शब्द भी होते हैं जिनमें किसी प्रकार की विकृति नहीं आती। इन्हीं शब्दों को अव्यय कहा जाता है। इन्हें अविकारी शब्द भी कहते हैं।

अव्यय शब्द निम्न प्रकार है :

1 . इव- केसमान
2 . उच्चैः- ऊंचा
3 . एव- ही
4 नूनम-निश्चय
5 . इतस्ततः- इधर, उधर
6 . कदापि- कभी
7 . विना- केबिना
8 . सहसा- अचानक
9 . वृथा- बेकार/ व्यर्थ
10 . शनै- धीरे
11 . इति- समाप्ति सूचकशब्द
12 . मा- नहीं
13 .यत- क्योंकि
14 . सम्प्रति- अब
15 . इदानीम्-अब
16 . अधुना- अब
17 .यावत्- जबतक
18. बहिः- बाहर
19 च- और
20 .अपि- भी
21 .पुरा- पहले
22.अत्र- यहां
23.तत्र- वहां
24 .यथा- जैसे
25 .तथा- वैसे
26.कदा- कब
27 .अद्य- आज
28.श्वः- आनेवालाकल
29.परश्व- परसों
30 .ह्यः-बीताहुआकल
31 .परह्यः-बीता हुआ परसों
32.किमर्थम्-किसलिये
33.कुत्र- कहां
34.यदि- यदि
35.तर्हि- तो

**(1). रिक्त स्थान पूर्ति**

1. यथा राजा .................. प्रजा।
2. रामेण सह सीता ................ अगच्छत्।
3. विद्यालये.................. उत्सवः भविष्यति।
4. सदाचारः ................... परमोधर्म।
5. कच्छपः ................ चलति।

**उत्तर-**

1. तथा,
2. अपि,
3. श्वः,
4. एव,
5. शनैः

**(2). उचितव्ययपदै सह रिक्तस्थानानि पूरयत-**

{यदि-तर्हि ,यथैव-तथैव, यत्र-तत्र, यावत्-तावत्}

(i) ............. अहं कृष्णवर्णः ............. त्वं किं गौराङ्गः!

(ii) ............. गुरुः वदति ............. शिष्यः करोति।

(iii) ............. वृक्षाः ............. खगाः।

(iv) ............. लता आगच्छति ............. त्वं तिष्ठ।

**उत्तर:**

(i) यदि अहं कृष्णवर्णः तर्हि त्वं किं गौराङ्गः!

(ii) यथैव गुरुः वदति तथैव शिष्यः करोति।

(iii) यत्र वृक्षाः तत्र खगाः।

(iv) यावत् लता आगच्छति तावत् त्वं तिष्ठ।

# अशुद्धि-संशोधनम्

1. वचन-दृष्ट्यासंशोधनम्

कर्तृक्रिययोः वचनं सर्वदा समानं भवति ।

यदि कर्ता एकवचने भवति तहि क्रिया अपि एकवचने भवति ।

यदि कर्ता द्विवचने भवति तर्हि क्रिया अपि द्विवचने भवति ।

यदि कर्ता बहुवचने भवति तर्हि क्रिया अपि बहुवचने भवति ।

यदि विशेष्यपदम् एकवचने भवति तर्हि विशेषणपदम् अपि एकवचने भवति ।

यदि विशेष्यपदम् एकवचने भवति तर्हि विशेषणपदम् अपि एकवचने भवति । यदि विशेष्यपदं द्विवचने भवति तर्हि विशेषणपदम् अपि द्विवचने भवति ।

यदि विशेष्यपदं बहुवचने भवति तर्हि विशेषणपदम् अपि बहुवचने भवति ।

**प्रयोगे कदाचित् वचनदृष्ट्या अशुद्धिः भवति।तस्याः केचन प्रकाराः सन्ति यथा-**

1. एकवचनस्य स्थाने बहुवचनस्य प्रयोगः क्रियते।
2. द्विवचनस्य स्थाने अपि बहुवचनस्य प्रयोगः क्रियते।
3. बहुवचनस्य स्थाने एकवचनस्य प्रयोगः क्रियते। संस्कृतभाषायाः नियमः अस्ति यत् विशेषणे तद् एव वचनं भवति यत् विशेष्ये भवति। अपरः नियमः अस्ति यत्क्रियायाम् तद् एवं वचनं भवति यत्वबर्न कर्तृ पदे भवति। यदि निध क्रियते तदा वचन प्रयोगे अशुद्धिः न भविष्यति।

अशुद्ध वाक्यम् शुद्धवाक्यम्

छात्रौ पठन्ति ।छात्राः पठन्ति ।

नायिका नृत्यन्ति ।नायिका नृत्यति ।

भवन्तः वदति ।भवान् वदति ।

**(क) विशेषणे विशेष्यवत्वचनम्**

पश्य एतानि वाक्यानि-

(1) एते उद्यानम् अस्ति।

(2) तत् पुष्पाणि सन्ति।

(3) सर्वे बालकौ क्रीडन्ति।

एतानि वाक्यानि अशुद्धानि सन्ति यथा-

(1) 'उद्यानम्' इति विशेष्यपदे तु एकवचनम्, अतः एते इति विशेषणे द्विवचनस्य प्रयोगः अशुद्धः अस्ति। शुद्धं वाक्यम् अस्ति- एतत् उद्यानम् अस्ति।

(2) 'पुष्पाणि' इति विशेष्यपदे बहुवचनम् अस्ति, किन्तु तत् इति विशेषणपदे एकवचनस्य प्रयोगः अशुद्धः अस्ति।विशेषणे-पदे अपि बहुवचनं भविष्यति। अतः शुद्धं वाक्यम् अस्ति तानि पुष्पाणि सन्ति।

(3) 'बालकौ' इति विशेष्यपदे तु द्विवचनम् अस्ति, किन्तु 'सर्वे' इति विशेषणपदे बहुवचनम् अस्ति। अत्र क्रियापदे अपि बहुवचनम् अस्ति अतः विशेष्यपदे अशुद्धिः अस्ति। विशेष्यपदे अपि बहुवचनं भवितव्यम्। अतः शुद्धं वाक्यं भविष्यति-सर्वेबालकाः क्रीडन्ति ।

**(ख) क्रियापदे कर्तृपदस्य वचनम्**

पश्य, एतानि वाक्यानि-

(1) देवदत्तः पत्राणि लिखन्ति ।

(2) बालकौ गृहे क्रीडति ।

(3) बालिकाः नृत्यतः।

एतानि वाक्यानि अशुद्धानि सन्ति। यथा-

i. कर्तृपदं 'देवदत्तः' एकवचने अस्ति, अतः 'लिखन्ति' क्रियापदे बहुवचनस्य प्रयोगः अशुद्धः। क्रियापदे अपि एकवचनं शुद्धं भविष्यति। यथा-देवदत्तः पत्राणि लिखति।

ii. कर्तृपदं बालकौ द्विवचने अस्ति, अतः क्रीडति क्रियापदे एकवचनस्य प्रयोगः अशुद्धः ।क्रियापदे अपि द्विवचनस्य प्रयोगः करणीयः यथा बालकौ गृहे क्रीडतः।

iii. कर्तृपदं बालिकाः बहुवचने अस्ति। अतः नृत्यतः क्रियापदे द्विवचनस्य प्रयोगः अशुद्धः अस्ति। क्रियापदे अपि बहुवचनस्य प्रयोग: करणीयः। अतः शुद्धवाक्यम् अस्ति बालिकाः नृत्यन्ति।

**विशेषः** 'शतम्' संख्या एकवचने भवति यथा शतं जनाः उपविशन्ति । 'विंशतिः एकवचने भवति। विंशतिः जनाः गच्छन्ति। प्रमाणम् एकवचने भवति, यथा वेदाः प्रमाणम्।

**(2 ) लिङ्ग-दृष्ट्यासंशोधनम्**

यदि विशेष्यपदं पुल्लिङ्गे भवति तर्हि विशेषणपदम् अपि पुल्लिङ्गे भवति ।

यदि विशेष्यपदं स्त्रीलिङ्गे भवति तर्हि विशेषणपदम् अपि स्त्रीलिङ्गे भवति ।

यदि विशेष्यपदम् एकवचने भवति तर्हि विशेषणपदम् अपि एकवचने भवति ।

यदि विशेष्यपदं नपुंसकलिङ्गे भवति तर्हि विशेषणपदम् अपि नपुंसकलिङ्गे भवति।

यदि विशेष्यपदं द्विवचने भवति तर्हि विशेषणपदम् अपि द्विवचने भवति ।

**कदाचित् लिङ्ग दृष्ट्या अशुद्धिः भवति। एतस्याः केचन प्रकाराः सन्ति यथा-**

i. पुल्लिङ्गस्य स्थाने स्त्रीलिङ्गस्य प्रयोगः।

ii. पुंल्लिङ्गस्य स्थाने नपुंसकलिङ्गस्य प्रयोगः।।

iii. स्त्रीलिङ्गस्य स्थाने पुंल्लिङ्गस्य प्रयोगः।

iv. स्त्रीलिङ्गस्य स्थाने नपुंसकलिङ्गस्य प्रयोगः।

v. नपुंसकलिङ्गस्य स्थाने पुंल्लिङ्गस्य प्रयोगः।

vi. नपुंसकलिङ्गस्य स्थाने स्त्रीलिङ्गस्य प्रयोगः।

**उदाहरणानि पश्य एतानि वाक्यानि।**

i. दशरथस्य चतस्त्रः पुत्राः आसन्।
ii. मम पार्श्वे त्रीणि छात्राः सन्ति।
iii. रमा तस्य गुणवान् पुत्री अस्ति।
iv. लता विनम्रम् अस्ति।
v. एतं पत्रं पठत।
vi. फलं प्रिया भवति।

एतानि सर्वाणि वाक्यानि अशुद्धानि सन्ति। यथा-

i. 'पुत्राः' इति विशेष्य-वत् विशेषणम् अपि पुंल्लिङ्गे भविष्यति, न तु स्त्रीलिङ्गे। अतः शुद्धंवाक्यम् अस्ति- दशरथस्य चत्वारः पुत्राः आसन् ।
ii. 'छात्राः' इति विशेष्यवत् विशेषणम् अपि पुंल्लिङ्गे भविष्यति, न तु नपुंसक लिङ्गे। अतः शुद्धं वाक्यं भविष्यति मम पाश्वें त्रयः छात्राः सन्ति।
iii. 'पुत्री' इति विशेष्यपदवत् विशेषणपदम् अपि स्त्रीलिङ्गे भविष्यति, न तु पुंल्लिङ्गे। अतः शुद्धं वाक्यं भविष्यति-रमा तस्य गुणवती पुत्री अस्ति।
iv. 'लता' इति विशेष्यपदवत् विशेषण पदमपि स्त्रीलिङ्गे भविष्यति, न तु नपुंसकलिङ्गे। अतः शुद्धं वाक्यं भविष्यति-लता विनम्रा अस्ति।
v. 'पत्रम्' इति विशेष्यपदवत् विशेषणपदमपि नपुंसकलिङ्गे भविष्यति न तु पुंल्लिङ्गे। अतः शुद्धं वाक्यं भविष्यति-एतत् पत्रं पठति।
vi. 'फलम्' इति विशेष्यपदवत् विशेषणपदमपि नपुंसकलिङ्गे भविष्यति न तु स्त्रीलिङ्गे। अतः शुद्धं वाक्यं भविष्यति- फलं प्रियं भवति।

**(3) पुरुष-दृष्ट्या संशोधनम्**

**यदि कर्ता प्रथमपुरुषे अस्ति तर्हि क्रिया अपि प्रथमपुरुषे भवति। यदि कर्ता मध्यम पुरुषे अस्ति तर्हि क्रिया अपि मध्यमपुरुषे भवति। यदि कर्ता उत्तम पुरुषे अस्ति तर्हि क्रिया अपि उत्तम पुरुषे भवति|**

प्रयोगे कदाचित् पुरुष-दृष्ट्या अशुद्धिः भवति। एतस्याः अधोलिखिताः प्रकाराः सन्ति, यथा-

i. प्रथमपुरुषस्य स्थाने मध्यमपुरुषस्य प्रयोगः ।
ii. प्रथमपुरुषस्य स्थाने उत्तमपुरुषस्य प्रयोगः ।
iii. मध्यमपुरुषस्य स्थाने प्रथमपुरुषस्य प्रयोगः ।
iv. मध्यमपुरुषस्य स्थाने उत्तमपुरुषस्य प्रयोगः।
v. उत्तमपुरुषस्य स्थानेप्रथमपुरुषस्य प्रयोगः।
vi. उत्तमपुरुषस्य स्थाने मध्यमपुरुषस्य प्रयोगः।

**उदाहरणानि पश्य एतानि वाक्यानि।**

| | **अशुद्धवाक्यम्** | **शुद्धवाक्यम्** |
|---|---|---|
| i. | तौं पुस्तकं पठति। | तौ पुस्तकं पठतः । |
| ii. | आवां पुस्तकं पठथः। | आवां पुस्तकं पठावः । |
| iii. | वयं रक्षन्ति। | वयं रक्षामः। |
| iv. | सा कुत्र वसामि? | सा कुत्र वसति? |

**(4) लकार - दृष्ट्या संशोधनम्**

कदाचित् लकार दृष्ट्या अपि अशुद्धिः भवति।भूतकालस्य स्थाने लट्लकारस्य प्रयोगः क्रियते, अथवा भविष्यत् कालस्य स्थाने लङ्लकारस्य लट्लकारस्य वा प्रयोगः क्रियते, अथवा वर्तमानकालस्य स्थाने लङ्लकारस्य लुट्लकारस्य वा प्रयोगः क्रियते

उदाहरणानि- एतानि वाक्या निपश्य-

i. अहम् श्वः गृहम् अगच्छम्।
ii. त्वं श्वः गृहं गच्छसि।
iii. सः ह्यः पाठं पठिष्यसि।
iv. वयं ह्यः व्रतम् आचरामः।
v. गंगा हिमालयात् प्रभविष्यति।
vi. मारुतः आत्मानं न अशोषयत्।

एतानि वाक्यानि अशुद्धानि सन्ति। एतेषां स्थाने शुद्ध वाक्यानि भविष्यन्ति, यथा-

i. अहं श्वः गृहं गमिष्यामि।
ii. त्वं श्वः गृहं गमिष्यसि।
iii. सः ह्यः पाठम् अपठत्।
iv. वयं ह्यः व्रतम् आचराम।
v. गंगा हिमालयात् प्रभवति।
vi. मारूतः आत्मानं न शोषयति।

**5.विभक्तिः - दृष्ट्यासंशोधनम्**

**i. द्वितीया-विभक्तिः (कर्मकारकम्)-**

| **अशुद्धवाक्यम्** | **शुद्धवाक्यम्** |
|---|---|
| व्याघ्रः मृगेषु हन्ति। | व्याघ्रः मृगान् हन्ति । |
| सिंहः शावकाः व्यापादयति। | सिंहः शावकान् व्यापादयति । |
| अहं तुभ्यं न पश्यामि। | अहं त्वाम् न पश्यामि । |

**ii. तृतीया-विभक्तिः (करणकारकम्) -**

| **अशुद्धवाक्यम्** | **शुद्धवाक्यम्** |
|---|---|
| आवां कन्दुकात् क्रीडामः। | आवां कन्दुकेन क्रीडामः । |
| रामः ग्रन्थः पठ्यते। | रामेण ग्रन्थः पठ्यते । |
| सः स्वपितुः सह आपणं गच्छति। | सः स्वपित्रा सह आपणं गच्छति । |

**iii. चतुर्थीविभक्तिः (सम्प्रदानकारकम्) -**

| **अशुद्धवाक्यम्** | **शुद्धवाक्यम्** |
|---|---|
| धनिकः निर्धनं भोजनं ददाति। | धनिकः निर्धनाय भोजनं ददाति । |
| नृपः विप्रान् धनं वितरति। | नृपः विप्रेभ्यः धनं वितरति । |
| माम् मोदकं रोचते। | मह्यं मोदकं रोचते । |

**iv. पञ्चमीविभक्तिः (अपादानकारकम्)-**

| **अशुद्धवाक्यम्** | **शुद्धवाक्यम्** |
|---|---|

| | |
|---|---|
| मानवः सिंहेन बिभेति। | मानवः सिंहात् बिभेति । |
| सुमित्रं पापेन निवारयति। | सुमित्रं पापात् निवारयति । |
| शिष्यः आचार्येण बिभेति। | शिष्यः आचार्यात् बिभेति । |

**v. षष्ठीविभक्तिः (संबन्धः)-**

| **अशुद्धवाक्यम्** | **शुद्धवाक्यम्** |
|---|---|
| बालकः मातरम् स्मरति । | बालकः मातुः स्मरति । |
| अर्जुनः पाण्डुना पुत्रः आसीत् । | अर्जुनः पाण्डौः पुत्रः आसीत् । |
| सर्वैः पित्रा आजा पालनीया | सर्वैः पितुः आज्ञा पालनीया । |

**vi. सप्तमीविभक्तिः (अधिकरणकारकम्)-**

| **अशुद्धवाक्यम्** | **शुद्धवाक्यम्** |
|---|---|
| सः मया वैरं विदधाति। | सः मयि वैरं विदधाति । |
| बालकः कार्यस्य कुशलः अस्ति। | बालकः कार्ये कुशलः अस्ति । |
| शिष्यः अध्ययनेन रतः। | शिष्यः अध्ययने रतः |

**अतिरिक्त उदाहरणानि**

| **अशुद्ध-वाक्यानि** | **शुद्ध-वाक्यानि** |
|---|---|
| अत्र सरोवरे आपः अस्ति। | अत्र सरोवरे आपःसन्ति। |
| विद्वान् सर्वत्र पूज्यन्ते । | विद्वान् सर्वत्र पूज्यते। |
| छात्र ञ्द्धयं पठतः। | छात्र द्वयं पठति। |
| सर्वः स्वार्धं समीहन्ते। | सर्वः स्वार्थ समीहते। |
| वयं कुत्र गच्छन्ति? | वयं कुत्र गच्छामः |
| पुरा वीरवरो नाम राजा आसन्। | पुरा वीरवरो नाम राजा आसीत्। |
| अयोध्यायां दशरथः वसति। | अयोध्यार्या दशरथः वसति स्म| |

**अधोलिखितानि वाक्यानि संशोध्यलिखत-**

i. ते कन्ये पठति।
ii. वयं हय: न गमिष्यामः।
iii. सिंहः वने वसन्तिः।
iv. त्वं बालकः खादसि ।
v. किं साश्वः आगमिष्यति ?

**उत्तरम्**

i. ते कन्ये पठतः।
ii. वयं हय: न अगच्छाम।
iii. सिंहः वने वसति।
iv. सा बालकः फलं खादति।
v. किं सा हय: आगमिष्यति

1. सः पुरुषाः सन्ति।
   अ) ते    ब) सा    स) तानि    द) ताः
2. वृक्षाणि हरिताः सन्ति।

अ) वृक्षे ब) वृक्ष स) वृक्षाः द) वृक्षम्

3. शाखेषु खगाः सन्ति।

अ) शाखा ब) शाखे स) शाखासु द) शाखाम्

4. वनः अतिविस्तृतम् अस्ति।

अ) वनम् ब) वने स) वनात् द) वनाय

5. उपवनः सुन्दरम् अस्ति।

अ) उपवनात् ब) उपवने स) उपवनम् द) उपवनाम्

6. त्वं काव्यं पठथ1 |

अ) पठसि ब) पठति स) पठामि द) पठामः

7. श्वःपरीक्षाआसीत्।

अ) अद् ब) ह्यः स) अधुना द) सम्प्रति

8. अधुना सः पाठं पठिष्यति।

अ) पठसि ब) पठति स) पठामि द) पठामः

9. धनिकः भिक्षुक भोजनं यच्छति।

अ) भिक्षुका ब) भिक्षुकः स) भिक्षुकम् द) भिक्षुकाय

10.ग्रामस्य अभितः वृक्षाः सन्ति।

अ) ग्रामः ब) ग्रामे स) ग्रामात् द) ग्रामम्

11.बालकं स्वस्ति।

अ) बालकाय ब) बालकः स) बालकम् द) बालकाः

12.विवादम् अलम्।

अ) विवादाय ब) विवादः स) विवादेन द) विवादात्

13.जल विना जीवनं न अस्ति।

अ .जलाय ब) जले स) जल द) जलम्

14.त्रयः पुस्तकानि सन्ति।

अ)त्रि ब) त्रीणि स) त्रे द) त्रयम्

15.भवत्यः पत्र लिखथः।

अ) लिखन्ति ब) लिखावः स) लिख द) लिखसि

**उत्तराणि-**

| | | |
|---|---|---|
| 1 ते | 6. पठसि | 11. बालकाय |
| 2. वृक्षाः | 7. ह्यः | 12. विवादेन |
| 3. शाखासु | 8. पठति | 13. जलम् |
| 4. वनम् | 9. भिक्षुकाय | 14. त्रीणि |
| 5. उपवनम् | 10. ग्रामम् | 15. लिखन |

# प्रथमः पाठ

## वाङ्मयं तपः

1. शारदा शारदाम्भोज वदना वदनाम्बुजे | सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात् ||

   अन्वयः-शारद-अम्भोज-वदना सर्वदा शारदा अस्माकम् वदन-अम्बुजे सर्वदा सन्निधिम् सत् निधिम् क्रियात्।

   सरलार्थ = कालीन ( सफेद ) कमल के समान सुन्दर मुख वाली एव सब कुच देने वाली माता सरस्वती देवी हमारे मुख रुपी कमल पर निरन्तर अपनी उपस्थिति ऐसे बनाते कि हमारे वाणी सुन्दर शब्द संपतियों से भर जाए |

2. अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति | व्ययतो वृद्धिमायाति क्षयमायाति संचायात ||

   अन्वयः- भारति! तव अयम् कोशः कः अपि अपूर्वः विद्यते। (यतो हि) व्ययतः वृद्धिम् आयाति, सञ्चयात् च क्षयम्
   सरलार्थ = हे सरस्वती तुम्हारा यह विद्या धन का कोष ( खजाना) बडा अद्भुत है , इसका जितना बाटो या खर्चकरो उतना ही बढता है इसके विपरीत जितना सहज कर रखो उतना ही घटता है ऐसा विचित्र है अतः इसे निरन्तर बाटते रहना चाहिए |

3. नास्ति विद्यासमं चक्षुः नास्ति सत्यसमं तपः| नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ||

   अन्वयः- विद्यासमम् चक्षुः न अस्ति, सत्यसमम् तपः न अस्ति। रागसमम् दुःखम् न अस्ति, त्यागसमम् सुखम् न अस्ति।
   सरलार्थ = विद्या जीवन के लिए बहुत महत्वपूर्ण है | इस ज्ञान के समान कोई नेत्र नहीं है सत्य से बढकर किई तपस्या नहीं है सम के समान किई दूसरा दुःख का कारण नहि है त्याग के समान किई सुख नही है |

4. न तथा शीतल सलिलं न चन्दनरसो न शीतला छाया| प्रह्लादयति च पुरुषं यथा मधुरभाषिणी वाणी ||
   अन्वयः यथा मधुरभाषिणी वाणी पुरुषम् प्रहलादयति तथा शीतल सलिलम न नन्दनरसन शीतला काया। (प्रहलादयति)।
   सरलार्थ = जो आनन्द मीठे बोल या मीठी वाणी में है, न तो ठडे पानी मे नही चन्दन के लेप में है, नही ठडी छाव छाया मे इस लिए हमें सदा या हमेशा मीठी वाणी बोलनी चाहिए |

5. शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा | ऊहापोहार्थ विज्ञानं तत्त्वज्ञानं च धीगुणाः ||

   अन्वयः शुश्रूषा, श्रवणम् च एव, ग्रहणम् तथा धारणम्, ऊह-अपोह, अर्थविज्ञानम्, तत्त्वज्ञानम् च धीगुणाः (सन्नि)।

सरलार्थ = इस श्लोक में बुद्धि के गुण बताये गए है किसी बात को सुनने की इच्छा होना फिर उसको सुनना सुनी हुई  बात के ग्रहण करना फिर उसको धारण करना उस पर चिन्तन मनना करना उसके शब्दार्थ को समझना अन्त मे उसके तात्विक अर्थ को समज्हणा ये बुद्धि के गुण बताये गए है|

6. माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः | धैर्यं लयसमर्थं च षडेते पाठका गुणाः ||

   अन्वयः- माधुर्यम्, अक्षरव्यक्तिः, पदच्छेदः तु सुस्वरः, धैर्यम् लयसमर्थम् च एते षट् पाठकगुणाः (सन्ति)।

   सरलार्थ = इस शलोक मे अच्छे पाठक के छह गुण बताये गए है , सुमधुर वाणी मे बोलना अक्षर को स्पष्ट बोलना शब्द को अलग करके बोलना अच्छे स्वर मे बोलना धैर्यता तथा लय के साथ गाने की क्षमता ये गुण होने पर अच्छे पाठक बन सकते है |

7. आचार्यात् पादमादत्ते पादं शिष्यः स्वमेधया | कालेन पादामादत्ते पादं सब्रह्मचारिभिः ||

   अन्वयः आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया। कालेन पादमादत्ते पादं सब्रह्मचारिभिः ॥
   सरलार्थ = छात्र अपाने कक्षा के अन्दर शिक्षक से 25 % , एक चौथाई सीख पाती है | फिर वह स्वयं होमवर्क करता है तो 25 % सीख लेता है | फिर आओअस मे छात्र चर्चा परिचर्चा करते है तो 25 % और सिखता  है |इस प्रकार वह 75% विषयों को सेईखा या ग्रहण करता हैअ शेष 25 % ज्ञान वह समय के साथ परिपक्व होने पर सीखता है|

8. अनु द्वेगकरं वाक्यं सत्यं प्रिय हितं च यत् | स्वाध्यायभ्यसनं चैव वाङ्मयं तप उच्यते ||

   अन्वयः-पत् वाक्यम् अनुद्वेगकरम् सत्यम् प्रियहितम् च (तथा) स्वाध्याय-अभ्यसनम् च एवं वाङ्मयं तपः उच्यते। सरलार्थ = किसी को उतेजित करणे वाली वाणी का प्रयोग न करना सदा सत्य बोलना , मीठी एव हितकार्वानी का प्रयोग करना निरन्तर अध्ययन एव अभ्यास करने मे वाणी के द्वारा की आने वाला तपस्य है |

**1. निम्नलिखित प्रश्नानाम् उत्तराणि एकपदेन उत्तरत**

(क) का अस्माकं सन्निधिं कुर्यात् ?

(ख) कोशः कथम् अस्ति ?

(ग) सत्यसमं किम् अस्ति ?

(घ) कीदृशी वाणी पुरुषं प्रह्लादयति ?

(ङ) पाठकानां कति गुणाः श्लोके वर्णिताः?

(च) स्वस्य मेधया कः पादम् आदत्ते ?

**उत्तराणि**

(क) शारदा (घ) मधुरभाषिणी (ख) अपूर्वः (ग) तपः (ङ) पट् (च) शिष्यः

2. **अधोलिखित प्रश्नानाम् उत्तराणि पूर्णवाक्येन लिखत-**

(क) भारत्याः कोशः कीदृशः विद्यते?

(क) भारत्याः कोष अपूर्वः विद्यते।

(ख) के पाठकाः गुणाः सन्ति?

(ख) माधुर्यम्, अक्षरव्यक्तिः, पदच्छेदः, सुस्वरः, धैर्यम् लय समर्थ च एतेषट्पाठकाः गुणाः सन्ति।

(ग) धियः गुणाः के के सन्ति?

(ग) शुश्रूषा, श्रवणं, ग्रहणं, धारण, ऊहः, अपोहः, अर्थ विज्ञानं तत्त्व ज्ञानं च धियः गुणाः सन्ति।

(घ) शिष्यः विद्यायाः अर्जनं कथं करोति?

(घ) आचार्यात्पादं, स्वमेधयापादम्, कालेनपादम्, स ब्रह्मचारिभिः पादं गृहीत्वा शिष्यः विद्यायाः अर्जनं करोति।

(ङ) कीदृशी शारदा सन्निधिं क्रियात्?

ङ) शारदाम्भोज वदना, सर्वदा, सन्निधिं शारदा सर्वदा अस्माकं वदनाम्बुजे सन्निधिं क्रियात्।

(च) वाङ्मयं तपः किम् उच्यते? क) धारायाः कोष अपूर्वः विद्यते।

(च) यत् वाक्यम् अनुद्वेगकरम्, सत्यं, प्रियहितम् च स्वाध्याय-अभ्यसनं च वाङ्मयं तपः उच्यते।

**3. स्थूलपणानि आधृत्य प्रश्ननिर्माणं कुरुत-**

(क) शारवा सर्वदा अस्माकं समीपे वसेत्।

(ख) भारत्याः कोशः अपूर्वः।

(च) मधुरभाषिणी वाणी पुरुषं प्रह्लादयति।

(घ) पाठकस्य षद् गुणाः सन्ति।

(ङ) सत्येन सम सुखं नास्ति।

(च) अनुद्वेगकर वाक्यं वाङ्मयं तपः उच्यते।

(छ) रागस्य विलोमः त्यागः।

**उत्तराणि**

(क) का सर्वदा अस्माकं समीपे वसेत्?

(ख) कस्याः कोशः अपूर्वः?

(ग) मधुरभाषिणी वाणी कम् प्रह्लादयति?

(घ) पाठकस्य कति गुणाः सन्ति ?

(ङ) केन समं सुखं नास्ति ।

(च) कीदृशं वाक्यं वाङ्मयं तपः उच्यते?

(छ) कस्य विलोमः त्यागः?

4. **अधोलिखितान् प्रश्नान् यथानिर्देशम् उत्तरत-**

(क) 'अपूर्वः कोशोऽयं विद्यते तव भारति।' अत्र क्रियापदं किम् ?

(ख) प्रथमे श्लाके कर्तृपदं किम्?

(ग) 'शीतला छाया' अनयोः पदयोः विशेष्यपदं किम् ?

(घ) 'उद्वेगकरम्' इति पदस्य विलोमपदं पाठात् चित्वा लिखत।

(ङ) 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।' अस्मिन् वाक्ये 'श्रोतुम् इच्छा' इत्यर्थे किं पदं प्रयुक्तम्

(च) 'व्ययतः' इति पदस्य विलोमपदं पाठात् चित्वा लिखत।

**उत्तराणि**

| | | |
|---|---|---|
| (क) विद्यते | (ग) छाया | (ङ) शुश्रूषा |
| (ख) शारदा | (घ) अनुद्वेगकरम् | (च) सञ्चयात् |

**प्रश्न 10 - श्लोकमाश्रित्य समुचितक्रमेण अन्वयं पूरयत -**

(क) हेभारति! तव अयं कोशः———विद्यते। (अयम्) व्ययतः———-, सञ्चयात्च——-आयाति।

(ख) विद्यासमम्—- न अस्ति, सत्यसमम् तपःन——-।रागसमम्——न अस्ति, ——सुखं न अस्ति।

(ग) यत्वाक्यम्——सत्यम्——- च (तथा) च स्वाध्याय-अभ्यसनम् एव——- तपःउच्यते।

**उत्तराणि-**

(क) हे भारति! तव अयम् कोशः **कः अपि अपूर्वः** विद्यते। (अयम्) व्ययतः **वृद्धिम् आयाति**, सञ्चयात् च क्षयम् आयाति।

(ख) विद्यासमम् चक्षु न अस्ति, सत्यसमम् तपः न अस्ति। रागसमम् दुःखम् न अस्ति, त्यागसमम् सुखम् न अस्ति।

(ग) यत् वाक्यम् अनुद्वेगकरम् सत्यम् प्रियहितम् च (तथा) च स्वाध्याय-अभ्यसनम् एव वाङ्मयं तपः उच्यते।

**प्रश्न 11 – अधोलिखितपङ्क्तिषु स्थूलाक्षरपदानाम् प्रसङ्गानुसारम् शुद्धम् अर्थं चिनुत –**

(क) स्वाध्यायाभ्यसनं चैव वाङ्मयं तपः उच्यते।

(i) साहित्यम् (ii) वाचिकम् (iii) वाक्युक्तम्

**उत्तराणि**-(ii) वाचिकम्

(ख) आचार्यात् पादम् आदत्ते

(i) श्लोकस्य पङ्क्तिं (ii) चरणम् (iii) चतुर्थान्शम्

**उत्तराणि**-(iii) चतुर्थान्शम्

(ग) माधुर्यम् अक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः।

(i) शर्करायुक्तम् (ii) कोमलतया वर्णोच्चारणम् (iii) मधुरतायाः अभावः

**उत्तराणि**-(ii) कोमलतया वर्णोच्चारणम्

(घ) सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात्।

(i) सर्वं ददाति इति (ii) सर्वाधिका (iii) सर्वं वदति इति

**उत्तराणि**-(i) सर्वं ददाति इति

(ङ) शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।

(i) सेवा (ii) श्रोतुम् इच्छा (iii) श्वश्रू

**उत्तराणि**- (ii) श्रोतुम् इच्छा

## द्वितीय पाठः
## नास्ति त्यागसमम् सुखम्

1. अथ एकदा भगवान् बोधिसत्त्वः बहुजन्मार्जितपुण्यफलैः शिवीनां राजा अभवत् । स बाल्यात् एव वृद्धोपसेवी, विनयशीलः, शास्त्रपारङ्गतः च आसीत्। जनकल्याणकर्मसु रतः असौ पुत्रवत् प्रजाः पालयति स्म। कारुण्य-औदार्यादि- सद्गुणोपेतः स नगरस्य समन्ततः धन-धान्यसमृद्धाः दानशालाः अकारयत् । तत्र अर्थिनां समूहः अन्न-पान-वसन-रजत- सुवर्णादिकानि अभीष्टानि वस्तूनि प्राप्य सन्तुष्टः अभवत् । राज्ञः दानशीलताम् आकर्ण्य देशान्तरेभ्योऽपि जनाः तं देशम्आयान्ति स्म।

   **शब्दार्थ**-बोधिसत्त्वः- बुद्ध का पूर्वजन्म के स्वरूप का नाम। बहु-जन्म-अर्जित-पुण्य-फलैः- अनेक पूर्व जन्मों में कमाये हुए पुण्यों (धर्म के कार्यों) के परिणामों से। बाल्यात्-बचपनसे। वृद्धोपसेवी-वृद्धों की सेवा करने वाला। विनयशीलः - नम्र। शास्त्र-पारङ्गतः - शास्त्रों में प्रवीण।रतः- संलग्न । कारुण्यं-करुणा, दया। औदार्यं-उदारता। सद्गुण- उपेतः - श्रेष्ठ गुणों से युक्त। समन्ततः- सब ओर से। अर्थिनाम्-याचकों का। रजतं-चाँदी। सुवर्णं- सोना। अभीष्टानि - मनचाही। आकर्ण्य-सुनकर । देशान्तरेभ्यः - दूसरे देशों से। आयान्ति स्म-आते थे।

   **<u>अर्थ</u>-**तदनन्तर एक बार भगवान् बोधसत्त्व अनेक जन्मों में अर्जित पुण्यों के परिणाम से शिवियों का राजा हुआ। वह बचपन से ही वृद्धों की सेवा करने वाला, विनम्र स्वभाव वाला तथा शास्त्रों में प्रवीण था। जन-कल्याण के कामों में लगापुत्र के समान प्रजा का पालन करता था। करुणा, उदारता आदि श्रेष्ठ गुणों से युक्त होकर उसने नगर में सम्पन्न दानशालाएँ बनवाईं। वहाँ याचकों का समूह भोजन, पेयपदार्थ, वस्त्र, चाँदी तथा सोना प्राप्तकरके संतुष्ट था राजा की दानशीलता सुनकर दूसरेदेशों के लोग भी उस देश में आते थे।

2. अथ कदा चित् दान शालासु विचरन् स राजा बहुधन लाभेन सन्तुष्टानाम् अर्थिनां विरल संख्यां विलोक्य अचिन्तयत्' मम अर्थिनः तु धनलाभ मात्रेण सन्तोषं भजन्ते। नूनं ते दानवीराः सौभाग्यशालिनः यान्याचकाः शरीरस्य अङ्गानि अपि याचन्ते।' एवं राज्ञः स्वेषु गात्रेष्वपि निरा सक्तिं विज्ञाय सकलं ब्रह्माण्डं व्याकुलं सञ्जातम्।

   **शब्दार्थ-** विचरन्-घूमते हुए। अर्थिनाम्-याचकों को । विलोक्य-देख कर। भजन्ते-प्राप्त करते हैं। नूनम- निश्चय ही। यान - जिनसे । गात्रेषु -अंगों में। अनासक्ति-लगाव न होना । विज्ञाय- जानकर। सकलं- सारा। संजातम्- हो गया ।

**अर्थम्-**तदनन्तर किसी समय दानशालाओं में भ्रमण करते हुए वह राजा अधिक धन की प्राप्ति से सन्तुष्ट हुए याचकों की कम हुई संख्या को देखकर सोचने लगा-मेरे याचक तो केवल धन की प्राप्ति से सन्तुष्ट हो जाते हैं । निश्चय ही वे दानवीर अधिक भाग्यशाली हैं जिनसे याचक शरीर के अंग भी माँग लेते हैं। इस प्रकार राजा की अपने शरीर के अंगों में अनासक्ति की भावना को जानकर सम्पूर्ण ब्रह्माण्ड व्याकुल हो गया।

3. राज्ञि एवं विचारयति सति तस्य दानशीलतां परीक्षितुं देवाधिपतिः शक्रः नेत्रहीनयाचकस्य रूपं धारयित्वा अवदत् -हे राजन् ! भवतः दानवीरताम् आकर्ण्य आशान्वितः ॥ भवत्समीपम् आगतोऽस्मि । देव ! रवि-शशि-तारा- मण्डलभूषितं जगत् एतत् कथमिव पश्येयं चक्षुर्हीनः ।
राजा उवाच भगवन्! भवन्मनोरथं पूरयित्वा आत्मानम् अनुगृहीतं कर्तुम् इच्छामि। आदिश्यतां किं करवाणि? विप्रः अकथयत्-यदि भवान् प्रीतः, तदा त्वत्तः एकस्य चक्षुषः दानम् इच्छामि येन मम लोकयात्रा निर्बाधा भवेत्। तत् श्रुत्वा राजा अचिन्तयत्, "लोके चक्षुर्दानं दुष्करमेव! नूनम् ईदृशं दानम् इच्छन् अयं याचकः केनापि प्रेरितःस्यात् ! अथवा भवतु नाम किं बहु चिन्तनेन।" इति विचार्य राजा अभाषत-"भो मित्र! किमेकेन चक्षुषा, अहं भवते चक्षुर्द्वयमेव प्रयच्छामि इति।
**शब्दार्थ-**राज्ञि-राजा के। विचारयति-विचार करने पर। परीक्षितुम्-परीक्षा लेने के लिए। देवाधिपतिः- देवताओं का स्वामी। शक्रः - इन्द्र । नेत्र-हीन-याचकस्य-नेत्रों से रहित (अन्ये) याचक का। धारयित्वा- धारण करके । भवतः - आपकी । आशान्वितः- आशा से युक्त होकर, भवत्समीपम्-आपके पास । आगतः - आया। रवि-शशि-तारामण्डल-भूषितम्-सूर्य, चन्द्रमा तथा तारोंसे मण्डित। कथमिव-किसी प्रकार से । पश्येयम्-मैं देख सकूँ। चक्षुर्हीनः- नेत्रों से रहित।कर्तुम- करने के लिए। विप्र - ब्राह्मण। चक्षुषः- नेत्र का। निर्बाधा- बाधा रहित। दुष्करम- कठिन।
**अर्थ-**राजा के इस प्रकार विचार करने पर उसकी दानशीलता की परीक्षा लेने के लिए देवताओं के राजा इन्द्र नेत्रहीन याचक का रूप धारण करके उसके सामने कहने लगे हे राजन् ! आपकी दानवीरता को सुनकर, आशा लगाकर मैं आपके सामने आया हूँ। हे राजन्, मैं नेत्रों से हीन इस सूर्य, चन्द्रमा तथा तारों से मण्डित संसार को किसी न किसी प्रकार देख सकूं।
राजानेकहा-भगवन् आपका मनोरथ पूरा करके मैं अपने आपको आपकी कृपा से युक्त करना चाहता हूँ। आदेश दें मैं क्या कर सकता हूँ। ब्राह्मण बोला अगर आप प्रसन्न हैं तो आपसे मैं एक आँख का दान चाहता हूँ कि जिससे देश यात्रा बाधा रहित हो सके। उसे सुनकर राजाने सोचा - संसार में नेत्रदान कठिन ही है। निश्चय ही ऐसे दान की इच्छा करता हुआ यह याचक किसी के द्वारा प्रेरित किया गया है। अथवा कुछ भी हो। अधिक सोचने से क्या लाभ? यह विचार कर राजा से कहा- "हे मित्र ! एक आँख से क्या? मैं आपके लिए दोनों आँखें ही दे देता हूँ।

4. राज्ञः नेत्रदानार्थं निश्चयं ज्ञात्वा अमात्याः विषण्णाः भूत्वा अवदन्- महाराज ! अलम् एतावता दुस्साहसेन, प्रभूतं धनमेव दीयताम् अथ स राजा तान् अवदत्--

दास्यामीति प्रतिज्ञाय योऽन्यथा कुरुते मनः।
कार्पण्यानिश्चित मतेः कः स्यात् पापतरस्ततः ॥
नाहं स्वर्गं न मोक्षं वा कामये किन्तु आर्तनाम् परितत्राणाय एव मे निश्चयः।
**शब्दार्थ-**अमात्याः - मंत्री । विषण्णाः-दुखी। कार्पण्यानिश्चितमतेः- कायरता के कारण निश्चय रहित बुद्धि।
अर्थ-राजा के नेत्रदान का निश्चय जान कर मंत्री दुःखी होकर कहने लगे-महाराज, इस दुस्साहस को मत कीजिए। (इसके बदले में) अधिक मात्रा में धन दे दीजिए तदनन्तर राजा ने उनको कहा-
मैं 'दूँगा' ऐसी प्रतिज्ञा करके जो मन को दूसरे प्रकार का कर लेता है, कायरता के कारण अनिश्चयात्मक बुद्धि वाले उससे अधिक बड़ा पापी और कौन हो सकता है? अर्थात् कोई नहीं।
मैं न स्वर्ग चाहता हूँ न ही मोक्ष किन्तु दुःखियों की रक्षा के लिए ही मेरा निश्चय है।

5. अस्य याच्ञा वृथा मा अस्तु इत्युक्त्वा स राजा वैद्योक्तविधिना नीलोत्पलम् इव एकं चक्षुः शनैः अक्षतम् उत्पाट्य प्रीत्या याचकाय समर्पितवान्। सः अपि तत् नेत्रं यथास्थानम् अस्थापयत्। ततो महीपालः द्वितीयं नेत्रमपि शनैः निष्कास्य तस्मै अयच्छत् । अथ विस्मितः शक्रः अचिन्तयत्-
**शब्दार्थ-**इत्युक्त्वा-ऐसा कह कर । वैद्योक्तविधिना-वैद्यों द्वारा बताई विधि से। नीलोत्पलम्-नीलकमल के। शनैः- धीरे से। अक्षतम्-, बिना खण्डित हुए। उत्पाट्य-उखाड़ कर। प्रीत्या-प्रेम पूर्वक। समर्पितवान्-भैंट कर दिया। सोऽपि-उसने भी। तन्नेत्रम्-उस नेत्र को।अस्थापयत्-रख दिया। ततः- तदनन्तर । महीपालः- राजा। द्वितीयम्-दूसरे । निष्कास्य-निकाल कर । तस्मै-इसे । अयच्छत्-दे दिया। शक्रः- इन्द्र ।
अर्थ-इस याचक की याचना व्यर्थ नहीं होनी चाहिए। यह कहकर उस राजा ने वैद्यों द्वारा बताई गई विधिपूर्वक नील कमल केसमान एक नेत्र को धीरे से बिना किसी हानि के उखाड़ कर प्रेमपूर्वक याचक को भेंट कर दिया। उसने भी उस नेत्र को यथा स्थान लगा दिया तब राजा ने दूसरे नेत्र को भी धीरे से निकाल कर उसको दे दिया विस्मित होकर इन्द्र ने सोचा-

6. अहो धृतिः! अहो सत्त्वम् !अहो सत्त्व हितैषिता नायं चिरं परिक्लेशम् अनुभवितुम् अर्हति। अतः प्रयतिष्ये चक्षुषोऽस्य पुनः प्रत्यारोपणाय इति।
कतिपयैः दिनैः व्रणविरोपणे जाते एकदा राजा सरोवरस्य समीपे विहरति स्म। तदा तस्य पुरतः पुनः देवराजः शक्रःउपस्थितः भूत्वा तस्य त्यागवृत्तिं प्रशंसन् अवदत् -
**शब्दार्थ-**परिक्लेशम्-कष्ट । सत्त्वम्-मन की शक्ति । अनुभवितुम् अर्हति-अनुभव के योग्य है। प्रयतिष्ये- मैं प्रयत्न करूँगा। व्रणविरोपणे-घाव भरने में। पुरतः - सामने।

अर्थ--इसे अधिक देर तक कष्ट का अनुभव कराना ठीक नहीं है। अतः मैं इसके नेत्र के प्रत्यारोपण का यत्न करूँगा। कुछ दिनों में घाव के भर जाने पर एक बार तालाब के किनारे बैठे हुए राजा के सामने फिर से देवराज इन्द्र उपस्थित होकर उसकी त्यागवृत्ति की प्रशंसा करते हुए कहने लगे।

7. शक्रोऽहमस्मि देवेन्द्रस्त्वत्समीपमुपागतः ।
   वरं वृणीष्व राजर्षे ! यदिच्छसि तदुच्यताम् ।
   एवम् उक्तेन राज्ञा नेत्रार्थं प्रार्थिते सति शक्रस्य प्रभावेण आत्मनः सत्यपुण्यबलेन च तस्य प्रथमम् एकं चक्षुः प्रतिष्ठितम् अभवत् ततः द्वितीयमपि।
   **शब्दार्थ---**वत्समीपम्- तुम्हारे पास। उपागतः आया हुआ। देवेन्द्रः- देवराज। वृणीष्व माँगो। प्रतिष्ठितम्-स्थित हो गया।
   अर्थ-तुम्हारे समीप आया हुआ मैं देवराज इन्द्र हूँ। हे राजर्षे, तुम वर माँगो, जो चाहते हो, उसे कहो। इस प्रकार कहे गये राजा के द्वारा नेत्र के लिए प्रार्थना किये जाने पर इन्द्र के प्रभाव से तथा उसके अपने सत्य एवं पुण्य के बल पर पहले उसका एक नेत्र स्थापित हुआ, उसके बाद दूसरा भी स्थापित हो गया।
8. भूयः प्रीतः शक्रः वरम् अयच्छत्- शैलानां पारं च द्रष्टुं समर्थः भव इति।
   शतयोजनपर्यन्तं इति उक्त्वा शक्रः तत्रैव अन्तर्हितः अभवत् ।
   **शब्दार्थ-भूयः** - फिर । अयच्छत्-दिया। शतयोजनपर्यन्तं-सौ योजन तक। शैलानां पारं-पर्वतों के पार। अन्तर्हितः -वहाँ ही अन्तर्धान हो गए।
   अर्थ----फिर प्रसन्न होकर इन्द्र ने उसे वर दिया- "सौ योजन तक पर्वतों के पार देखने में समर्थ बनो" यह कहकर इन्द्रवहाँ ही अन्तर्धान हो गए।
9. अतः सत्यमेव उक्तम्-
   धनस्य निःसारलघोः स सारो यद् दीयते लोकहितोन्मुखेन ।
   निधानतां याति हि दीयमानम्, अदीयमानं निधनैकनिष्ठम् ॥

   अन्वयः- निःसारलघोः धनस्य सः सारः यत् लोकहित-उन्मुखेन दीयते। दीयमानम् (धनं) निधानतां हि याति। अदीयमानं
   शब्दार्थ---निःसार-लघोः- सारहीन, अत्यल्प। धनस्य यत्-धन का जो अंश ;
   दीयते-दान में दिया जाता है। अदीयमानम्-न दिया जाता हुआ। निधानताम्-समृद्धि (निधि)
   अर्थ-लोक-मंगल की दृष्टि से प्रवृत्त व्यक्ति के द्वारा जो धन दान में दिया जाता है, अतीव सारहीन एवं मात्रा में अत्यल्प होते हुए भी धन का वह अंश सारवान् (महत्त्वपूर्ण) हो जाता है। दिया जाता हुआ धन समृद्धि को प्राप्त हो जाता है तथा न दिया हुआ धन तो ऐसा धन होता है जिसकी नियति विनाश ही होती है।

---

**अभ्यास प्रश्ना:----**

1. ---------------वाक्येषु रेखांकितपदनां प्रश्न निर्माण कुरुत--

1) जनाः तं देशम् आयान्ति स्म।
2) त्वत्तः एकस्य चक्षुषः दानम् इच्छामि।
3) लोके चक्षुषः दानं दुष्करम् अस्ति ।
4) राजा आत्मानम् अनुगृहीतं कर्तुम् इच्छति।
5) राजा शक्राय चक्षुः समर्पितवान् ।
6) राजा याचकेभ्य: दानम ददाति स्म।

**उत्तर----**

1-के | 3- कस्य | 5- कस्मै
2-कस्य | 4-किम् | 6- केभ्य:

1. ----- प्रसङ्गानुसारं रेखाङ्कितपदानाम् अर्थ विकल्पेभ्यः चित्वा लिखत- .

1) -अस्य याञ्चा वृथा मा अस्तु।
(क) दानम् (ख) करणम् (ग) याचनम् (घ) वदनम्
2) लोके चक्षुर्दानं दुष्करम् इति ।
(क) संसारे (ख) गृहे (ग) विद्यालये (घ) स्थले
3) नृपस्य स्वेषु गात्रेषु निरासक्तिः अभवत् ।
(क) देहेषु ख) अङ्गेषु ग) नेत्रेषु (घ) कर्णेषु
4) मम अर्थिनः सन्तोषं भजन्ते ।
(क) कुर्वन्ति (ख) चलन्ति (ग) प्राप्नुवन्ति (घ) वदन्ति
5) असौ पुत्रवत् प्रजाः पालयति स्म ।
(क) शक्रः (ख) भिक्षुकः (ग) प्रजाः (घ) नृपः
6) राजा एकं चक्षुः प्रीत्या याचकाय समर्पितवान् ।
(क) शान्त्या (ख) प्रसन्नतया (ग) दयया (घ) कीर्त्या
7) क्रमशः याचकानां संख्या विरला जाता।
(क) न्यूना (ख) अधिका (ग) सरला (घ) विशिष्टा
8) अमात्याः अवदन् ।
(क) मन्त्रिणः (ख) द्वारपालाः (ग) सेवकाः (घ) राजकर्मचारिण

**उत्तर-**

1-याचनम् | 4- प्राप्नुवन्ति | 7- न्यूना
2- संसारे | 5- नृपः | 8- मन्त्रिणः
3-अङ्गेषु | 6- प्रसन्नतया

---------------------------------------------------------------------------------------------

**3- अधोलिखितानि वाक्यानि कथाक्रमानुसारं लिखत-**

1- महीपालः द्वितीयं नेत्रमपि शनैः निष्कास्य तस्मै अयच्छत् ।

2- स बाल्यात् एवं वृद्धोपसेवी, विनयशीलः शास्त्रपारङ्गतः च आसीत्।

3- वरं वृणीष्व राजर्षे! यदिच्छसि तदुच्यताम्

4- कारुण्य-औदार्यादि सद्गुणोपेतः स नगरस्य समन्ततः धन-धान्यसमृद्धाः दानशालाः अकारयत्।

5- राजा अचिन्तयत् 'मम अर्थिनः तु धनलाभमात्रेण सन्तोषं भजन्ते।

6- जनकल्याणकर्मसु रतः असौ पुत्रवत् प्रजाः पालयति स्म।

7- एकदा राजा सरोवरस्य समीपे विहरति स्म।

8- राज्ञः दानशीलताम् आकर्ण्य जनाः तं देशम् आयान्ति स्म।

**उत्तराणि-**

2- स बाल्यात् एवं वृद्धोपसेवी, विनयशीलः शास्त्रपारङ्गतः च आसीत्।

6- जनकल्याणकर्मसु रतः असौ पुत्रवत् प्रजाः पालयति स्म।

4- कारुण्य-औदार्यादि सद्गुणोपेतः स नगरस्य समन्ततः धन-धान्यसमृद्धाः दानशालाः अकारयत्।

8- राज्ञः दानशीलताम् आकर्ण्य जनाः तं देशम् आयान्ति स्म।

5- राजा अचिन्तयत् 'मम अर्थिनः तु धनलाभमात्रेण सन्तोषं भजन्ते।

1- महीपालः द्वितीयं नेत्रमपि शनैः निष्कास्य तस्मै अयच्छत् ।

7- एकदा राजा सरोवरस्य समीपे विहरति स्म।

3- वरं वृणीष्व राजर्षे! यदिच्छसि तदुच्यताम्

---

**पठित अनुच्छेद-----------1**

एकदा भगवान् बोधिसत्त्वः बहुजन्मार्जितपुण्यफलैः शिवीनां राजा अभवत् । स बाल्यात् एव वृद्धोपसेवी, विनयशीलः, शास्त्रपारङ्गतः च आसीत्। जनकल्याणकर्मसु रतः असौ पुत्रवत् प्रजाः पालयति स्म। कारुण्य-औदार्यादि- सद्गुणोपेतः स नगरस्य समन्ततः धन-धान्यसमृद्धाः दानशालाः अकारयत् । तत्र अर्थिनां समूहः अन्न-पान-वसन-रजत- सुवर्णादिकानि अभीष्टानि वस्तूनि प्राप्य सन्तुष्टः अभवत् । राज्ञः दानशीलताम् आकर्ण्य देशान्तरेभ्योऽपि जनाः तं देशम् आयान्ति स्म।अथ कदाचित् दानशालासु विचरन् स राजा बहुधनलाभेन सन्तुष्टानाम् अर्थिनां विरलसंख्यां विलोक्य अचिन्तयत् 'मम अर्थिनः तु धनलाभमात्रेण सन्तोषं भजन्ते। नूनं ते दानवीराः सौभाग्यशालिनः यान् याचकाः शरीरस्य अङ्गानि अपि याचन्ते ।' एवं राज्ञः स्वेषु गात्रेष्वपि निरासक्तिं विज्ञाय सकलं ब्रह्माण्डं व्याकुलं सञ्जातम्।

प्रश्नाः-

1. **एकपदेन उत्तरत (केवलं प्रश्नद्वयम्)**

   i-क: बाल्यात् एव वृद्धोपसेवी अासीत्?

   ii राजा कस्य समन्ततः दानशाला अकारयत् ?

   iiiके सौभाग्यशालिनः?

2. **पूर्णवाक्येन उत्तरत (केवलं प्रश्नद्वयम्)**

   1- सकलं ब्रह्माण्डं किम् ज्ञात्वा व्याकुलं सञ्जातम्?

   2- अर्थिनां विरलसंख्यां विलोक्य राजा किम् अचिन्तयत्?

   3-जनाः तं देशम् किमर्थम् आयान्ति स्म?

3. **निर्देशानुसारम् उत्तरत - (केवलं प्रश्नद्वयम्)**

   1- आयान्तिइति क्रियापदस्य कर्तृपदम् किम्?

   2-"धन-धान्यसमृद्धाः दानशालाः" अत्र विशेषणपदम् किम्?

   3-"जनाः तं देशम् आयान्ति" अत्र क्रिया पदम् किम्?

**उत्तराणि-**1

i. शिवि

ii. नगरस्य

iii. दानवीराः

2-

1- राज्ञः स्वेषु गात्रेष्वपि निरासक्तिं विज्ञाय सकलं ब्रह्माण्डं व्याकुलं सञ्जातम्।

2- अर्थिनां विरलसंख्यां विलोक्य अचिन्तयत् 'मम अर्थिनः तु धनलाभमात्रेण सन्तोषं भजन्ते।

3- राज्ञः दानशीलताम् आकर्ण्य देशान्तरेभ्योऽपि जनाः तं देशम् आयान्ति स्म।

3-

1- जनाः 3- आयान्ति

2- धन-धान्यसमृद्धाः

---

**पठित अनुच्छेद-----------2**

नाहं स्वर्गं न मोक्षं वा कामये किन्तु आर्तानां परित्राणाय एव मे निश्चयः। अस्य याच्ञा वृथा मा अस्तु ।

इत्युक्त्वा स राजा वैद्योक्तविधिना नीलोत्पलम् इव एकं चक्षुः शनैः अक्षतम् उत्पाट्य प्रीत्या याचकाय समर्पितवान्। सः अपि तत् नेत्रं यथास्थानम् अस्थापयत्। ततो महीपालः द्वितीयं नेत्रमपि शनैः निष्कास्य तस्मै अयच्छत् । अथ विस्मितः शक्रः अचिन्तयत्-

अहो धृतिः ! अहो सत्त्वम् !

अहो सत्त्वहितैषिता कार्य चिरं दतेः ब्रणविरोपणे जाते एकदा राजा सरोवरस्य समीपे विहरति स्म।

**प्रश्नाः-**

1. एकपदेन उत्तरत (केवलं प्रश्नद्वयम्)
   - i. राजा नेत्रम् कस्मै अयच्छत्?
   - ii. याचकः नेत्रं कुत्र अस्थापयत्?
   - iii. आर्तानाम् परित्राणाय कस्य निश्चयः?

2.पूर्णवाक्येन उत्तरत (केवलं प्रश्नद्वयम्)
   - i. राजा स्वं एकं चक्षुः कथं याचकाय समर्पितवान्?
   - ii. विस्मितः शक्रः किम् अचिन्तयत्?
   - iii. कस्य याञ्चा वृथा मा अस्तु?

3. निर्देशानुसारम् उत्तरत - (केवलं प्रश्नद्वयम्)
   - i. 'कामये' इति क्रियायाः कर्तृपदं किम् ?
   - ii. 'चक्षुः' इति पदस्य किं विशेषणम् प्रयुक्तम्?
   - iii. 'अचिन्तयत्' इति क्रियापदस्य कर्तृपदम् किम्?

**उत्तराणि-**

1.

(i) याचकाय

(ii) यथास्थानम्

(iii) नृपस्य/राज्ञः

2.

(i) राजा स्वं एकं चक्षुः वैद्योक्तविधिना नीलोत्पलम् इव शनैः अक्षतं उत्पाट्य प्रीत्या याचकाय समर्पितवन।

(ii) विस्मितः शक्रः अचिन्तयत् यत् अस्य नृपस्य सत्वहितौषिताः महती अस्ति।

(iii) याचकस्य याञ्चा वृथा मा अस्तु।

3.

(i) अहम्

(ii) एकम्

(iii) शक्रः।

---

**पठित अनुच्छेद-----------3**

भवन्मनोरथं पूरयित्वा आत्मानम् अनुगृहीतं कर्तुम् इच्छामि। आदिश्यतां किं करवाणि? विप्रः अकथयत्-यदि भवान् प्रीतः, तदा त्वत्तः एकस्य चक्षुषः दानम् इच्छामि येन मम लोकयात्रा

निर्बाधा भवेत्। तत् श्रुत्वा राजा अचिन्तयत्, "लोके चक्षुर्दानं दुष्करमेव! नूनम् ईदृशं दानम् इच्छन् अयं याचकः केनापि प्रेरितःस्यात् ! अथवा भवतु नाम किं बहु चिन्तनेन।" इति विचार्य राजा अभाषत-"भो मित्र! किमेकेन चक्षुषा, अहं भवते चक्षुर्द्वयमेव प्रयच्छामि इति।

प्रश्नाः-

1. एकपदेन उत्तरत (केवलं प्रश्नद्वयम्)
   i. राजा कम् अनुगृहीतं कर्तुम् इच्छति?
   ii. कः चक्षुर्द्वयं दातुम् इच्छति?
   iii. विप्रः कस्य दानम् इच्छति?
2. पूर्णवाक्येन उत्तरत- (केवलं प्रश्नद्वयम्)
   i. लोके किं दुष्करं भवति?
   ii. नृपः किम् अचिन्तयत्?
   iii. विप्रः किम् वाञ्छति स्म?
3. निर्देशानुसारम् उत्तरत - (केवलं प्रश्नद्वयम्)
   i. त्वत्तः एकस्य चक्षुषः दानम् इच्छामि'अत् विशेषण पदम कि ?
   ii. नाट्यांशे 'याचक' पदस्य कः विलोमः प्रयुक्तः?
   iii. 'प्रयच्छामि' इति क्रियापदस्य कर्तृपदं किम्?

**उत्तराणि-**

I.

(i) आत्मानम् (ii) नृपः (iii)नेत्रस्य

2.

(i) लोके चक्षुर्दानम् दुष्करम् भवति।

(ii) नृप अचिन्तयत् यत् लोके चक्षुर्दानं दुष्करमेव। नूनं ईदृशम् दानम् इच्छन् अयं याचकः केनापि प्रेरितःस्यात्।

(iii) नेत्रस्य/चक्षुषः

(iv) विप्रः एकस्य चक्षुषः वाञ्छति स्म।

3.

(i) एकस्य (ii) दाता (iii) अहम् ।

---

**4-----दास्यामीति प्रतिज्ञाय योऽन्यथा कुरुते मनः।**

कार्पण्या निश्चित मतेः कः स्यात् पापतरस्ततः ॥

**प्रश्ना:-**

1. एकपदेन उत्तरत- (केवलं प्रश्नद्वयम्)
   (i) कः मनः अन्यथा करोति ?

(ii) किं प्रतिज्ञाय पापतरः मनः अन्यथा करोति?

(iii) प्रतिज्ञाम् कृत्वा किम् अन्यथा कुरुते?

2. पूर्णवाक्येन उत्तरत (केवलं प्रश्नद्वयम्)

(i) पापतरः किमर्थम् मनः अन्यथा कुरुते?

(ii) कार्पण्यः कः भवति?

(iii) प्रतिज्ञाय कृत्वा किम् न कर्तव्यम्?

3.निर्देशानुसारम् उत्तरत - (केवलं प्रश्नद्वयम्)

(i) 'कृपणता' इत्यर्थे श्लोके किं पदं प्रयुक्तम् ?

(ii) 'यो' इति कर्तृपदस्य क्रियापदं किम्?

(iii) 'उदारता' इति पदस्य विपरीतार्थक पदं किम्?

**उत्तराणि-**

1. (i) पापतरः (ii) दास्यामि (iii)मन:

2. (i) पापतरः कार्पण्यानिश्चितमतेः अन्यथा मनः कुरुते।

(ii) यः प्रतिज्ञाम् कृत्वा दानं न करोति। सः कार्पण्यः भवति।

(iii) प्रतिज्ञा कृत्वा अन्यथा न कर्तव्यम् |

3. (i) कार्पण्य (ii) कुरुते (iii) कार्पण्य

## तृतीयः पाठः

## रमणीया हि सृष्टिः एषा

1. स्थानम् -सरस्तीरम्| समयः-प्रभातवेला | तत्र राजहंसः हंसी च विहरतः |नेपथ्ये काकध्वनिः श्रूयते |

राजहंसः- ये !किन्नु खलु सरस्तीरे विहरतिमयि केनापि कर्कशैः "काका " शब्दैः वातावरणम् आकुली क्रियते ?

राजहंसी - भर्तः ! काकात् अन्यः कः भवितुमर्हति ? अस्यवर्णः अपि कृष्णः , कर्म अपि कृष्णम् |मेध्यम् अमेध्यं सर्वमेव भक्षयति |कर्णकटुशब्दैः .......

काकः-(प्रविश्य,सक्रोधम्) आः!किम् उक्तवती भवती ? यदि अहं कृष्णवर्णः तर्हि श्रीरामस्य वर्णः कीदृशः? श्रीवासुदेवस्यवर्णः कीदृशः? मुग्धे! अहं तु अतीव कर्तव्यपरायणः | प्रभाते "काका" ध्वनिना सुप्तान् प्रबोधयामि कर्म सु च विनियोजयामि|

**शब्दार्थाः**

विहरतः= विहार करते हैं

कर्कशः=कठोर

आकुलीक्रियते =व्याकुल किया जाता है

मेध्यम् = शुद्ध

अमेध्यम् = अशुद्ध

सुप्तान्= सोए हुओं को

प्रबोधयामि= जगाता हूँ

विनियोजयामि = लगाता हूँ

**हिंदीअनुवाद**

स्थान- तालाब का किनारा; समय-सवेरे का समय। वहाँ राजहंस तथा राजहंसी विहार कर रहे हैं। परदे के पीछे से कौए की ध्वनि सुनाई देती है। ]

राजहंस-अरे! क्या निश्चय ही तालाब के किनारे मेरे विहार करने पर किसी के द्वारा' का', 'का' इस प्रकार कठोर शब्दों से वातावरण दूषित किया जा रहा है?

राजहंसी - हे स्वामी! कौए से भिन्न कौन हो सकता है? इसका रंग भी काला तो कर्म भी काला। भक्ष्य, अभक्ष्य सबको ही खा जाता है। कानों को कठोर लगने वाले शब्दों से...

कौआ ( प्रवेश करके, क्रोध पूर्वक) अरी, आपने क्या कहा? अगर मैं काले रंग का हूँ तो श्रीराम का रंग कैसा है? वासुदेव (वसुदेवपुत्र) श्रीकृष्ण का रंग कैसा है? हे भोली ! मैं तो बहुत कर्तव्य परायण हूँ। प्रातः काल 'का', 'का' ध्वनि के द्वारा सोये हुओं को जगाताहूँ और कर्मों में नियोजित करता हूँ (लगाता हूँ) ।

**सन्धिःविच्छेदो वा**

सरस्तीरम् = सरः + तीरम्        किन्नु = किम् + नु

**समासोविग्रहो वा**

सरसः तीरम्- सरस्तीरम्        न मेध्यं - अमेध्यम्

प्रभातस्य वेला -प्रभातवेला        क्रोधेन सहितं -सक्रोधम्

काकस्यध्वनिः -काकध्वनिः        कर्तव्येपरायणः - कर्तव्यपरायणः

**अव्यय-पद-चयनम् वाक्य-प्रयोगश्च**

च - और        राजहंसः हंसी च विहरतः|

अपि -भी        अस्य वर्णः अपि कृष्णः ,कर्म अपि कृष्णम् |

यदि-तर्हि = अगर- तो        यदि अहंकृष्ण वर्णः तर्हि श्रीरामस्य वर्णः कीदृशः ?

**प्रकृति-प्रत्ययोः विभाजनम्**

प्रभातवेला = प्रभातवेल + टा प्राजहंसी = राजहंस + ङीप् भवती = भवत् + ङीप्

**पर्यायपदानि**

कर्कशैः = कठोरैः        अन्यः = अपरः

वेला = समयः        अमेध्यम् =अशुद्धम्

आकुलीक्रियते = व्याकुलीक्रियते        भक्षयति =खादति

**विपर्ययपदानि**

कर्कशैः- मधुरैःमेध्यम् - अमेध्यम्कृष्णः - श्वेतःनिर्गम्य -प्रविश्य

**एकपदेन उत्तरत |**

(i) नेपथ्ये का श्रूयते?

काकध्वनिः

(ii) काकात् अन्यः कः भवितुमर्हति इति का पृच्छति ?

राजहंसी

(iii) कः मेध्यम् अमेध्यं सर्वमेवभक्षयति ?

काकः

**पूर्णवाक्येन उत्तरत |**

(i)सरस्तीरे के विहरतः ?

सरस्तीरे राजहंसःहंसी च विहरतः |

(ii)काकः प्रभाते किं करोति ?

प्रभाते "काका " ध्वनिना सुप्तान् प्रबोधयति कर्मसु च विनियोजयति |

भाषिकं कार्यम्

(i) शुद्धम् इत्यर्थे किं पदम् अनुच्छेदे प्रयुक्तम् ?

मेध्यम्

(ii) शब्दैः इत्यस्य विशेषणपदम् अनुच्छेदात् चित्वा लिखत |

कर्कशैः

(iii) श्वेतः इति पदस्य विलोमपदं किम् ?

कृष्णः

**2. राजहंसः- हुं ! किमनेन ? एतत्कार्यं तु कुककुटोऽपि करोति |**

**काकः -(विहस्य ) कुक्कुटः | अरे अद्य कुतःकुक्कुटा नगरेषु |अहमेव सर्वत्र सुलभः |**

**राजहंसी - भोः-भो वाचाल! स्वीयैः कटुभिः क्वणितैः जन जागरणात् अन्यत्तु किमपि न करोषि?**

**काकः - अहो अज्ञानं भवत्याः !अरे ! यस्य गृहस्य भित्तौ स्थित्वा आलपामि , जनाः प्रियस्य आगमन संकेतं मत्वा हृष्यन्ति | किं बहुना!अहं तु एतादृशः सत्यप्रियः यत्मातरः शिशून् कथयन्ति -"अनृतं वदसि चेत् काकः दशेत् |" अस्माकम् ऐक्यं तु जगत् प्रसिद्धम् |सर्वथा जागरूकोऽहं छात्राणां कृते आदर्शः एव |किं न श्रुतं काक चेष्टा ,बकध्यानम् ---------**

**राजहंसः- विरमविरम ! श्रूयतां यत् जनैः सर्वदा गीयते तव विषये -**

**काकस्य गात्रं यदि काञ्चनस्य माणिक्य रत्नं यदि चञ्चुदेशे |**

**एकैक पक्षे ग्रथितं मणीनां तथापि काको न तु राजहंसः ||**

**अपिच**

**हंस श्वेतः बकः श्वेतः कोभेदः बकहंसयोः |**

**नीर क्षीर विवेके तु हंसो हंसःबको बकः ||**

**शब्दार्थाः**

अद्य = आज

विहस्य = हसकर

वाचाल = बातूनी

क्वणितैः = अस्पष्टस्वरोंसे

हृष्यन्ति =प्रसन्नहोतेहैं

ऐक्यम् = एकता

अनृतम् =असत्य

जागरूकः =सावधान

विरम = रुको

गात्रम् = शरीर

काञ्चनस्य = सोनेका

चञ्चुदेशे= चोंचकेहिस्सेमें

नीरक्षीरविवेकः = पानी तथा दूध का अलग अलग ज्ञान रखने में

**हिंदी अनुवाद**

राजहंस - हूँ ! इससे क्या।यह काम तो मुर्गा भी कर लेता है।

कौआ- (हसकर) मुर्गा! अरे आज शहरों में मुर्गे कहाँ? मैं ही सब जगह आसानी से मिल सकता हूँ।

राजहंसी -अरे अरे बातूनी! अपने कड़वे कठोर शब्दों से लोगों को जगाने के अतिरिक्त तुम और कुछ भी नहीं करते। अहो, आपका अज्ञान! अरे, जिस घर की दीवार पर बैठकर मैं बोलता हूँ तो लोग उसे अपने प्रिय जन के आने का (शुभ) संकेत मानकर प्रसन्न होते हैं। अधिक कहने से क्या? मैं तो इतना सत्य प्रेमी हूँ कि माताएँ बच्चों से कहती हैं कि यदि तू झूठ बोलेगा तो तुझे कौआ काट लेगा। हमारी एकता तो संसार भर में प्रसिद्ध है। सब प्रकार से जागरूक (सावधान) रहने वाला मैं छात्रों के लिए आदर्श हूँ। क्या आपने नहीं सुना - (छात्रोंकी) कौए जैसी जागरूक चेष्टा (होनीचाहिए) तथा बगुले जैसा ध्यान ( होनाचाहिए ) ।

राजहंस- रुको, रुको! सुनिए, तुम्हारे विषय में जो गीत लोगों से सदा गाया जाता है-

कौए का शरीर यदि सोने का हो जाए, चोंच के स्थान पर माणिक्य और रत्न हो जाएँ, एक-एक पंख में मोतियों का गुम्फन हो तो भी कौआ राजहंस तो नहीं हो जाता। और भी,

हंस सफेद है बगुला सफेद है। हंस और बगुले में (रंगकीदृष्टिसे ) क्या भेद है? अर्थात् कुछ नहीं। किन्तु पानी तथा दूध को अलग-अलग करने के विषय में हंस-हंस है तथा बगुला - बगुला है। अर्थात् पानी और दूध पृथक् करने का कार्य केवल हंस ही कर सकता है, बगुला नहीं।

**सन्धिः-विच्छेदो वा**

कुक्कुटोऽपि = कुक्कुटः + अपि

जागरूकोऽहम् = जागरूकः + अहम्

तथापि = तथा + अपि

काकोन = काकः + न

हंसोहंसः = हंसः + हंसः

एकैकपक्षे = एक + एकपक्षे

कोभेदः = कः + भेदः

**समासो-विग्रहो वा**

सत्यप्रियः = सत्यं प्रियं यस्य सः

जगत्प्रसिद्धम् = जगतिप्रसिद्धम्

काकचेष्टा = काकस्य चेष्टा

बकध्यानम् = बकस्य ध्यानम्

बकहंसयोः = बकःच हंसःच ,तयोः

माणिक्यरत्नम् = माणिक्यानि च रत्नानि च तेषां समाहारः

नीरक्षीरविवेके = नीरं च क्षीरं च नीरक्षीरे , तयोः विवेकः ,तस्मिन्

अनृतम् = नऋतम्

चञ्चुदेशे = चञ्चोदेशे

**अव्यय-पद-चयनं वाक्य-प्रयोगश्च**

अद्य = आज अद्य कुतः कुक्कुटा नगरेषु?

यत् अहं तु एतादृशः सत्यप्रियः यत् मातरः शिशून् कथयन्ति |

एव = हि सर्वथा जागरूकोऽहं छात्राणां कृते आदर्शः एव

**प्रकृति-प्रत्यययोःविभाजनम्**

क्वणितैः - क्वण् + क्त

विहस्य - वि + हस् + ल्यप्

**पर्यायपदानि**

कथयन्ति = वदन्ति

अनृतम् =असत्यम्

मत्वा = विचार्य

काञ्चनस्य = स्वर्णस्य

श्रूयताम् = आकर्ण्यताम्

ऐक्यम् = एकता

कर्कशः = कठोरः

गात्रम् = शरीरम्

नीरम् =जलम्

क्षीरम् = दुग्धम्

**विपर्ययपदानि**

सुलभः - दुर्लभः

अज्ञानम् -ज्ञानम्

अनृतम् - ऋतम् ,सत्यम्

श्वेतः - कृष्णः

विवेकः - अविवेकः

**एकपदेन उत्तरत |**

(i) काकः केषां कृते आदर्शःभवति ?
छात्राणाम्

(ii) कः सर्वत्र सुलभः अस्ति ?
काकः

(iii) काकः कुत्र स्थित्वा आलपति ?
गृहस्य भित्तौ

**पूर्णवाक्येन उत्तरत |**

(i) मातरः शिशून् किं कथयन्ति?

मातरः शिशून् कथयन्ति -“अनृतं वदसि चेत्काकः दशेत् |”

(ii) बकहंसयोः भेदः कदा भवति ?

बकहंसयोः भेदः नीर क्षीर विवेके भवति |

**भाषिकं कार्यम् |**

(i) सत्यम् इति पदस्य विलोमपदम् अनुच्छेदात् चित्वा लिखत |

अनृतम्

(ii) एतत्कार्यं तु कुककुटोऽपि करोति - अस्मिन् वाक्ये कर्तृपदं किम् ?

कुक्कुटः

(iii) जनाःप्रियस्य आगमन संकेतं मत्वा हृष्यन्ति |अस्मिन् वाक्ये कर्तृपदं किम् ?

जनाः

(iv) शरीरम् इति पदस्य समानर्थकपदम् अनुच्छेदात् चित्वा लिखत |

गात्रम्

**3.बकः : (प्रविश्य, स्वपक्षौ अवधूय)कथं माम् अपि अधिक्षिपसि | किं ते महत्वम् ? वर्षतौ तु मानसं पलायसे |अहम् एव अत्र वृष्टेः अभिनन्दनं करोमि |कीदृशी तव मैत्री ? आपत्काले सरांसि त्यक्त्वा दूरं व्रजसि | वस्तुतः अहमे वशीतले जले बहूकाल पर्यन्तम् अविचलं ध्यानमग्नः स्थित प्रज्ञः इव तिष्ठामि |दुग्ध धवलाः मे पक्षाः | न जाने कथं माम् अपरिगणयन्तः जनाः चित्रवर्णम् अहि भुजं मयूरं "राष्ट्र-पक्षी "इति मन्यन्ते |अहमेवयोग्यः ---**

**मयूरः : (प्रविश्य साट्टहासम् ) सत्यं सत्यम् |अहमेव राष्ट्र पक्षी |को न जानाति तव ध्यानावस्थाम् ?मौनं धृत्वा वराकान् मीनान् छलेन अधिगृह्य , क्रूरतया भक्षयसि | धिक् त्वाम् | अवमानितं खलु सर्वं पक्षिकुलं त्वया |**

**काकः - रे सर्प भक्षक ! नर्तनात् अन्यत् किम् अपरं जानासि ?**

**मयूरः - श्रूयतां श्रूयताम् |मम नृत्यं तु प्रकृतेः आराधना | पश्य! चारु वर्तुल चन्द्रिका शोभितानां मम पिच्छानाम् अपूर्वसौन्दर्यम् | मम केकारवं श्रुत्वा कोकिलः अपि लज्जसे | मम शिरसि राज मकुटमिव शिखां स्थापयता विधात्रा एव अहं पक्षिराजः कृतः |**

**शब्दार्थाः**

स्वपक्षौ= अपने पंखों को

अवधूय= हिलाकर

अधिक्षिपसि= अपमानित करते हो

पलायसे = भागते हो

व्रजसि = चले जाते हो

अविचलम् = बिना हलचल

स्थितप्रज्ञः = निश्चित बुद्धिवाला

दुग्धधवलाः = दूध के समान सफेद

अहिभुजम् = गरुड को

वराकान् =बेचारों को

छलेन = छल पूर्वक

अधिगृह्य = पकड़कर

चारुवर्तुल चन्द्रिका शोभितानाम् = सुन्दर गोलार्ध चन्द्राकार से सुशोभितों के

विधात्रा = ब्रह्माजी के द्वारा

**हिंदी अनुवाद**

बगुला -(प्रवेश करके अपने पंखों को हिलाकर ) तुम क्यों मेरी भी निन्दा कर रहे हो। तुम्हारा क्या बड़प्पन है? तुम वर्षा के आने पर तो मानसरोवर भाग जाते हो। मैं ही यहाँ वर्षा का स्वागत करता हूँ। तुम्हारी कैसी मित्रता है? आपत्ति के समय तालाबों को छोड़कर दूर चले जाते हो। वस्तुतः ( असलमें ) मैं ही ठण्डे जल में बहुत समय तक बिना हलचल के ध्यान मग्न स्थितप्रज्ञ की भाँति रहता हूँ। मेरे पंख दूध के समान सफेद हैं। न जाने क्यों लोग मेरी गणना (मान्यता) न करके विचित्र पंखों वाले सर्प भक्षी मोर को ही राष्ट्र पक्षी मानते हैं। योग्य तो मैं ही ( हूँ) ।

मोर- (प्रवेश करके, ठहाका लगाकर ) सच है, सच है। मैं ही राष्ट्र पक्षी हूँ। तुम्हारी ध्यान की स्थिति को कौन नहीं जानता? चुप्पी साधकर बेचारी मछलियों को छल पूर्वक पकड़कर निर्दयता पूर्वक खा जाते हो। तुम्हें धिक्कारहै। निश्चय ही सारा पक्षी समूह तुम्हारे द्वारा अपमानित किया गया है।

कौआ- अरे सर्पभक्षक, नाचने के अतिरिक्त तू और क्या जानता है?

मोर- सुनिए सुनिए। मेरा नृत्य तो प्रकृति की पूजा है। सुन्दर गोल चन्दो एसे सुशोभित मेरे पंख समूह की अद्वितीय सुन्दरता है। मेरी केका ध्वनि को सुनकर कोयल भी लज्जित हो जाती है। मेरे सिर पर राज मुकुट के समान शिखा को स्थापित करते हुए ब्रह्माजी के द्वारा ही मुझे पक्षिराज (पक्षियों का राजा) बनाया गया था।

**सन्धिःविच्छेदो वा**

वर्षर्तौ = वर्षा + ऋतौ

वृष्टेः + अभिनन्दनम् = वृष्टेरभिनन्दनम्

नर्तनात् + अन्यत् = नर्तनादन्यत्

विधात्रा + एव + अहम् = विधात्रैवाहम्

**समासो-विग्रहो वा**

आपत्काले = आपदां काले

ध्यानमग्नः = ध्याने मग्नः

स्थितप्रज्ञः = स्थिता प्रज्ञा यस्यसः

दुग्धधवलाः= दुग्धम् इव धवलाः

अहिभुजम् = अहिंभुङ्क्ते इतितम्

राष्ट्र-पक्षी = राष्ट्रस्य पक्षी

साट्टहासम् = अट्टहासेन सहितम्

ध्यानावस्थाम् =ध्यानस्य अवस्थाम्

पक्षिकुलम् = पक्षिणां कुलम्

सर्पभक्षकः = सर्पस्य भक्षकः

चारुवर्तुल चन्द्रिका शोभितानाम् = चारुभिः वर्तुलाभिः चन्द्रिकाभिः शोभितानाम्

पक्षिराजः = पक्षिःचासौ राजाच

**अव्यय-पद-चयनम् वाक्य-प्रयोगश्च**

अपि -भी कथंमाम् अपि अधिक्षिपसि ?

मम केका रवं श्रुत्वा कोकिलः अपि लज्जसे |

एव - ही अहम् एव अत्र वृष्टेःअभि नन्दनं करोमि |

इव = की तरह       स्थित प्रज्ञः इव तिष्ठामि |

**प्रकृति-प्रत्यययोः विभाजनम्**

प्रविश्य - प्र + विश् + ल्यप्
त्यक्त्वा - त्यज् + क्त्वा
अवधूय - अव + धू + ल्यप्
कीदृशी - कीदृश + ङीप्
महत्त्वम् - महत् + त्व
आराधना - आराधन + टाप्

**पर्यायपदानि**

अधिक्षिपसि = तिरस्करोषि
वराकान् = दयनीयान्
पलायसे = धावसि
भक्षयसि =खादसि
व्रजसि = गच्छसि
विधात्रा = ब्रह्मणा
स्थितप्रज्ञः = स्थिरबुद्धिः

**विपर्यय पदानि**

मैत्री - शत्रुता
सत्यम् - असत्यम्
शीतले - उष्णे
अवमानितम् - बहुमानितम्
योग्यः - अयोग्यः

**एकपदेन उत्तरत |**

(i) कः स्व पक्षौ अवधूय प्रविशति ?
बकः

(ii) कः वृष्टेः अभिनन्दनं करोति ?
बकः

(iii) केन मयूरः पक्षिराजः कृतः?
विधात्रा

**पूर्णवाक्येन उत्तरत |**

(i) जनाः कं "राष्ट्र-पक्षी "इति मन्यन्ते**?**
जनाः चित्रवर्णम् अहिभुजं मयूरं "राष्ट्र-पक्षी "इति मन्यन्ते |

(ii) मम नृत्यंतु प्रकृतेः आराधना - इति कः वदति ?
मम नृत्यंतु प्रकृतेः आराधना - इति मयूरः वदति |

**भाषिकं कार्यम् |**

(i) अहम् एव अत्र वृष्टेः अभिनन्दनं करोमि - अस्मिन् वाक्ये क्रियापदं किम् ?
करोमि

(ii) परित्यज्य इत्यस्य अर्थे किं पदम् अनुच्छेदे प्रयुक्तम् ?
त्यक्त्वा

(iii) जले इत्यस्य विशेषणशब्दं किम् ?
शीतले

**4.कोकिलः - (प्रविश्य ) रे मयूर! अलम् अति विकत्थनेन | मधु मासे आम्र वृक्षेस्थित्वा यदा अहं पञ्चम स्वरेण गायामि तदा श्रोतारः कथयन्ति -**

**काकः कृष्णः पिकः कृष्णः कोभेदः पिककाकयोः |**

**वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ||**

**काकः- रे परभृत्! अहं यदि तव संततिं न पालयामि तर्हि कुत्रस्युः पिका: ? अतः अहम् एव करुणापरः पक्षि सम्राट काकः!**

**राजहंसः - शान्तं शान्तम् |अहमेव नीर क्षीर विवेकी पक्षिणां राजा |**

**बकः - धिक् युष्मान् ! अहमेव सर्व शिरोमणिः !**

**(ततः प्रकृति माता प्रविशति )**

**प्रकृतिः - (सस्नेहम् )अलम् अलं मिथः कलहेन | अहं प्रकृतिः एव युष्माकं जननी | यूयं सर्वे एव मे प्रियाः | सर्वेषामेव महत्वं विद्यते यथा समयम् | सर्वैः एवमे शोभा | न तावत्कलहेन समयं वृथा यापयेत | मिलित्वा एव मोदध्वं जीवनं चर समयं कुरुध्वम् | सर्वे मिलित्वा गायन्ति -**

**आयुषः क्षण एकोऽपि नलभ्यः स्वर्ण कोटिकैः |**

**स चेन्निरर्थकं नीतः कानु हानिस्ततोऽधिका ||**

**अधुना रमणीया हि सृष्टिरेषा जगत्पतेः |**

**जीवाः सर्वेऽत्र मोदन्तां भावयन्तः परस्परम् ||**

**शब्दार्थाः**

अतिविकत्थनेन = बहुत शेखी मत कर पिकः= कोयल परभृत् = कोयल

पक्षिसम्राट् = पक्षियों के राजामिथः = आपसमें

मोदध्वम् = आनन्द मनाओ स्वर्ण कोटिकैः= करोड़ों स्वर्ण मुद्राओं के बदले में भी

अधुना = अभी

**हिंदी अनुवाद**

कोयल-(प्रवेशकरके)अरेमोर! बहुत शेखी मतकर। चैत्र मास में आम के पेड़ पर बैठकर जब मैं पंचम स्वर से गाती हूँ तो सुनने वाले कहते हैं - कौआ काला है, कोयल काली है, कौए और कोयल में' क्या अन्तर है'? वसन्त ऋतु के आने पर कौआ, कौआ हो जाता है और कोयल, कोयल हो जाती है। (अर्थात् वसन्त ऋतु में आवाज के कारण कौए और कोयल के अन्तर का पता चल जाता है।)

कौआ -अरी दूसरों पर निर्भर रहने वाली ! अगर मैं तुम्हारी सन्तान कोन पालूँ तो कोयलें कहाँ होंगी? इसलिए करुणा परायण पक्षि सम्राट् तो मैं कौआ ही हूँ।

राजहंस- शान्त हो जाओ (ऐसा मिथ्या वचन मत कहो)। नीर-क्षीर - विवेकी पक्षियों का राजा तो मैं ही हूँ।

बगुला - तुम्हें धिक्कार है।मैं ही सबका शिरोमणि हूँ।

(उसके बाद प्रकृति माता प्रवेश करती है )

प्रकृति- (स्नेहपूर्वक) आपस में विवाद मत करो। मैं प्रकृति ही तुम सबकी माता हूँ। तुम सबही मेरे प्रिय हो। समयानुसार सब का ही महत्त्व है। सबके द्वारा ही मेरी शोभा है। तो कलह में व्यर्थ समय न गँवाओ। मिलकर ही आनन्द मनाओ और जीवन को रसमय बनाओ। सब मिलकर गाते हैं-

आयु का एक पल करोड़ों स्वर्ण मुद्राओं के बदले में भी प्राप्त नहीं किया जा सकता। यदि उसे अर्थ हीन बिता दिया जाए तो उससे अधिक और क्या हानि हो सकती है?

संसार के स्वामी का यह संसार अब निश्चय ही सुन्दर है। सब प्राणी इसमें एक-दूसरे के प्रति सद्भावना रखते हुए प्रसन्न रहें।

**सन्धिः-विच्छेदो वा**

एकोऽपि = एकः + अपि

सचेन्निरर्थकं = सः + चेत् + निरर्थकम्

हानिस्ततोऽधिका = हानिः + ततः + अधिका

सृष्टिरेषा = सृष्टिः + एषा

सर्वेऽत्र = सर्वे + अत्र

कोभेदः = कः + भेदः

मिलित्वैव = मिलित्वाएव

धिग्युष्मान् = धिक्युष्मान्

**समासो-विग्रहो वा**

आम्रवृक्षे = आम्रस्य वृक्षे

पिककाकयोः = पिकः च काकःच पिककाकौ ,तयोः

वसन्तसमये = वसन्तस्य समये

परभृत् = परैः भ्रियते

सर्वशिरोमणिः = सर्वेषां शिरोमणिः

सस्नेहम् = स्नेहेन सहितम्

यथासमयम् = समयम् अनतिक्रम्य

पञ्चमस्वरेण = पञ्चमः च असौ स्वरः ,तेन

**अव्यय-पद-चयनम् वाक्य-प्रयोगश्च**

यदि - तर्हि = अगर - तो

अहं यदि तव संततिं न पालयामि तर्हि कुत्र स्युः पिका:?

एव = हि

अहम् एव करुणा परः पक्षिसम्राट् काकः!

अधुना = अभी

अधुना रमणीया हि सृष्टिरेष

**प्रकृति-प्रत्ययोः विभाजनम्**

स्थित्वा= स्था + क्त्वा

रमणीया = रमणीय + टाप्

**पर्यायपदानि**

कथयन्ति = वदन्ति

मिथः= परस्परम्

जननी = माता

आयुषः = वयसः

रमणीया = मनोहरा

**एकपदेन उत्तरत |**

(i)मधुमासे आम्रवृक्षे स्थित्वा कः पञ्चमस्वरेण गायति ?

कोकिलः

(ii) अहमेव सर्व शिरोमणिः ! इति कः वदति ?

बकः

(iii) एषा कस्य सृष्टिः ?

जगत्पतेः

**पूर्णवाक्येन उत्तरत |**

(i) काकपिकयोः भेदः कदा भवति ?

काकपिकयोः भेदः वसन्तसमये भवति |

(ii) प्रकृतिमाता सस्नेहं किं वदति ?

प्रकृतिमाता सस्नेहं वदति - अलम् अलं मिथः कलहेन | अहं प्रकृतिःएव युष्माकं जननी |यूयं सर्वे एव मे प्रियाः |सर्वेषामेव महत्वं विद्यते यथा समयम् |सर्वैः एव मे शोभा | न तावत् कलहेन समयं वृथा यापयेत |मिलित्वा एव मोदध्वंजीवनं चरसमयं कुरुध्वम् |

**भाषिकं कार्यम् |**

(i) कोकिलः इति पदस्य समानार्थक पदम् अनुच्छेदे किं प्रयुक्तम् ?

पिकः ,परभृत्

(ii) करुणापरः इत्यस्य विशेष्यपदं किम् ?

काकः

(iii) जीवाः सर्वेऽत्र मोदन्ताम् - अत्र क्रियापदं किम् ?

मोदन्ताम्

(iv) सृष्टिः इति पदस्य विशेषणपदं किम् ?

रमणीया

## चतुर्थः पाठः

## आज्ञा गुरूणां हि अविचारणीया

**सारांश -** किसी नगर में चन्द्र नामक राजा था | उसके महल में वानरसमूह तथा भेड़ों का समूह था | एकभेड़ रसोई में घुसकर भोज्य पदार्थों को खा जाया करता था | उसकी इस आदत से वहां कलह रहता था |

वानरों के अधिपति ने सभी वानरों को महल छोड़ने के लिए कहा | परन्तु एक भी वानर ने उसकी बात नहीं मानी | एक दिन जैसे ही वह भेड़ रसोई में घुसा, वैसे ही रसोइये ने उसे जलती लकड़ी से मारा | इस प्रकार उसके बालों में आग लग गई | आग को बुझाने के लिए

वह घुडसाल में घुस गया | वहाँआग बुझाने के लिए जैसे ही उसने अपना शरीर जमीन पर रगडा वैसे ही वहाँ की घास में आग लग गई | वहाँ आग से अनेकों घोड़े जल गए |

तब राजा ने घोड़ों के उपचार के लिए एकवैद्यको बुला लिया | वैद्य ने पर्याप्त विचार के बाद राजा को बताया कि घोड़ों का आग के जलने से उत्पन्न शरीर के विकार बंदरों की चर्बी से उसी प्रकार नष्ट हो जाता है जिस प्रकार सूर्य के उदय होने पर अँधेरा |

वैद्य की यह सलाह सुनकर सभी वानर पश्चात्ताप करने लगे |

**अधोलिखित गद्यांशान् पठित्वा प्रदत्त प्रश्नानां उत्तराणि लिखत -**

1- कस्मिन्श्चित नगरे चन्द्रो नाम भूपति: प्रतिवसति स्म | तस्य पुत्राः वानर क्रीडारता: वानरयूथं नित्यमेव विविधै: भोज्य पदार्थैः पुष्टिं नयन्ति स्म | तस्मिन राजगृहे बालवाहन योग्यम् मेषयूथम् आसीत् | तेषां मेषाणां मध्ये एको मेषः जिह्वालोलुपतया अहर्निशं महानसं प्रविश्य यत् पश्यति तद् भक्षयति | ते च सूपकाराः यत्किञ्चित काष्ठं, मृण्मयं भाजनं कांस्यताम्रपात्रं वा पश्यन्ति तेन तम् आशु ताडयन्ति स्म |

**एकपदेन उत्तरत-**

(i) 'चन्द्रः' इति कस्य नाम आसीत् ?
(ii) राजपुत्राः कैः सह क्रीडन्ति स्म ?
(iii) भूपतेः नाम किम् ?
(iv) जिह्वालोलुपतया कः महानसं प्रविश्य यत् पश्यति तद् भक्षयति ?
(v) राजगृहेकीदृशं मेषयूथं आसीत् ?

**उत्तराणि:-**

(i) भूपतेः
(ii) वानरैः
(iii) चन्द्रः
(iv) मेषः
(v) बालवाहनयोग्यम्

**पूर्णवाक्येन उत्तरत -**

(i) भूपतेः पुत्राः वानरयूथं कैः पुष्टिं नयन्ति स्म ?
(ii) सूपकारः मेषं केन ताडयन्ति स्म ?
(iii) मेषः अहर्निशं कुत्र प्रविश्य यत् पश्यति तद् भक्षयति ?
(iv) मेषः किमर्थं महानसं प्रविशति एव किं च भक्षयति ? किमुचितं तत् ?

**उत्तराणि :-**

(i) भूपतेः पुत्राः वानरयूथं विविधैः भोज्यपदार्थैः पुष्टिं नयन्ति स्म |
(ii) सूपकारः मेषं यत्किञ्चित काष्ठं, मृण्मयंभाजनं कांस्यताम्रपात्रम् वा पश्यन्ति तेन तम् आशु ताडयन्ति स्म |
(iii) मेषः अहर्निशं महानसं प्रविश्य यत् पश्यति तद् भक्षयति |

(iv) मेषः जिह्वालोलुपतया महानसं प्रविशति एवं यत् पश्यति तद् भक्षयति | परम् तत् उचितं नास्ति |

**निर्देशानुसारं उत्तरत -**

(i) 'पाकशालाम्' इति पदस्य पर्यायपदं गद्यांशे किम् प्रयुक्तम् ?

(क) मेषम् (ग) महानसम्

(ख) वानरम् (घ) नृपम्

(ii) 'दिवारात्रिः' इति अस्य किम् समानार्थकं अव्ययपदं गद्यांशे किम् प्रयुक्तम् ?

(क) मृण्मयम् (ग) महानसं

(ख) अहर्निशम् (घ) मेषयूथं

(iii) 'पश्यति' इति क्रियापदस्य कर्तृपदं किम् ?

(क) वानरः (ग) मेषः

(ख) सूपकारः (घ) नृपः

(iv) 'तम् आशु ताडयन्ति स्म'- अत्र 'तम्' पदं कस्मै प्रयुक्तम् ?

(क) नृपाय (ग) मेषाय

(ख) वानराय (घ) सूपकाराय

**उत्तराणि:-**

(i) महानसम् (ii) अहर्निशं (iii) मेषः (iv) मेषाय

2- मेषस्य सूपकाराणां च कलहं अवेक्ष्य नीतिविदाम् अग्रणी: वानरयूथं अचिन्तयत्- एतेषां कलहो न् वानराणां हिताय |' एवंविचार्य स यूथपः सर्वान् कपीन् आहूय रहसि अवदत्- "सूपकारणां मेषेन सह एषः कलहः नूनं भवतां विनाशकारणं भविष्यति |" उक्तम् हि -

तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः |
तद्गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत् ||

**भावार्थ(श्लोक)**- जिस घर में बिना कारण झगडा रहता हो, इस कारण अपना जीवन चाहने वाला प्राणी उस घर को दूर से छोड़दे|

**एकपदेन उत्तरत -**

(i) मेषस्य सूपकाराणां च कलहः केषां हिताय न् आसीत् ?

(ii) यूथपति कान् आहूय उपदेशं अयच्छत्?

(iii) किम् वाञ्छन् कलहयुक्तं गृहं त्यजेत् ?

(iv) सर्वान् कपीन् आहूय कः रहसि अवदत् ?

(v) नीतिविदाम् अग्रणी कः आसीत् ?

**उत्तराणि:-**

1-

(i) वानराय

(ii) कपीन्

(iii) नीतिविदाम्

(iv) जीवितम्

(v) वानरयूथपः

**पूर्णवाक्येन उत्तरत -**

(i) कीदृशः गृहं दूरतः एव त्यक्तव्यं ?

(ii) केषां कलहः वानराणां हिताय न् आसीत् ?

(iii) यूथपः कपीन् आहूय रहसि किम् अवदत् ?

(iv) वानरयूथपति: किं अचिन्तयत्?

(v) किं वाञ्छन् जनः कलहयुक्तं गृहं दूरतः परिवर्जयेत् ?

**उत्तराणि:-**

(i) यत्र गृहे नित्यम् अकारणतः कलहः स्यात् तत् गृहं दूरतः एव त्यक्तव्यम्|

(ii) मेषस्य सूपकाराणां च कलह वानराणां हिताय न आसीत् |

(iii) यूथपः कपीन् आहूय रहसि अवदत् - "सूपकाराणां मेषेण सह एषः कलह नूनं भवतां विनाशकरणम् भविष्यति |

(iv) वानरयूथपतिः अचिन्तयत् - मेषस्य सूपकाराणां कलहो न् वानराणां हिताय |

(v) यत्र गृहे नित्यम् अकारणतः कलहः स्यात् | जीवितं वाञ्छन् नरः तद् गृहं दूरतः परिवर्जयेत् |

**निर्देशानुसारं उत्तरत -**

(i) 'भवतां विनाशकारणं भविष्यति'- अत्र 'भवतां' इति सर्वनाम पदं कस्मै प्रयुक्तम् ?

(क) सूपकाराय (ख) वानराय (ग) नृपाय (घ) मेषाय

(ii) 'दृष्ट्वा' इति स्थाने किं पदं अत्र प्रयुक्तम् ?

(क) अवेक्ष्य (ख) विचार्य (ग) नूनम् (घ) दुःखः

(iii) 'अकारणः' इति पदं कस्य पदस्य विशेषणम्?

(क) तस्मात् (ख) कलहः (ग) दूरतः (घ) यूथपः

(iv) 'एकान्ते' इति पदस्य अर्थे किं पदं गद्यांशे प्रयुक्तम्?

(क) एवम् (ख) रहसि (ग) एषः (घ) सह

**उत्तराणि:-**

(i) ख - वानराय (ii) क - अवेक्ष्य (iii) ख- कलहः (iv) ख - रहसि

3- तस्य वचनं अश्रद्धेयम् मत्वा मदोद्धताः कपयः प्रहस्य अवदन्- "भो किमिदं उच्यते? न् वयम् स्वर्गसमानोपभोगान् विहाय अट्व्यां क्षार-तिक्त-कषाय-कटु-रुक्ष फलानि भक्षयिष्यामः|" तच्छ्रुत्वा साश्रुनयनो यूथपतिः सगदगदं उक्तवान्- "रसना स्वाद लुब्धाः यूयम् अस्य सुखस्य कुपरिणामं न् जानीथ, अहं तु वनम् गच्छामि|"

**एकपदेन उत्तरत-**

(i) मदोद्धता कपयः यूथपतेःवचनं कीदृशं अमन्यत् ?

(ii) कटु-रुक्ष फलानि कुत्र भवन्ति ?

(iii) कः वनम् गच्छति ?

(iv) साश्रुनयनः कः अभवत् ?

**उत्तराणि:-**

(i) अश्रद्धेयम् (ii) अटव्याम् (iii) यूथपः/यूथपतिः (iv)यूथपतिः

**पूर्णवाक्येन उत्तरत-**

(i) कपयः कान् त्यक्त्वा वनम् गन्तुं न इच्छति स्म ?

(ii) मदोद्धताः कपयः प्रहस्य यूथपतिंकिम् अवदन् ?

(iii) अट्व्यां कीदृशानि फलानि प्राप्यन्ते ?

(iv) यूथपतिः किं अवदत् ? अथवा वानरयूथपतिःस गदगदं किं उक्तवान्?

**उत्तराणि:-**

(i) कपयः स्वर्ग समानोपभोगान् त्यक्त्वा वनम् गन्तुं न इच्छति स्म|

(ii) मदोद्धता कपयः प्रहस्य यूथपतिं अवदन् - "न वयम् स्वर्ग समानोप भोगान् विहाय अटव्यां क्षार-तिक्त-कषाय-कटु रुक्ष फलानि भक्षयिष्यामः |"

(iii) अटव्यां क्षार-तिक्त-कषाय-कटु रुक्ष फलानि प्राप्यन्ते|

(iv) यूथपतिः अवदत् - “रसनास्वादलुब्धाः यूयम् अस्य कुपरिणामं न् जानीथ | अहम् तु वनम् गच्छामि |”

**निर्देशानुसारं उत्तरत-**

(i) ‘जानीथ’ इति क्रियापदस्य कर्तृपदं किम् ?

(क) यूयम् (ख) त्वम् (ग) अस्य (घ) अहम्

(ii) ‘त्यक्त्वा’ इतिपदस्य समानार्थकं पदं गद्यांशात् चित्वा लिखत |

(क) जानीथ (ख) प्रहस्य (ग) विहाय (घ) यूयम्

(iii) ‘वयम्’ इति कर्तृपदस्य क्रियापदं किमस्ति ?

(क) भक्षयिष्यामः (ख) अवदन् (ग) उक्तवान् (घ) जानीथ

(iv) ‘यूथपतिः’ इति पदस्य विशेषणपदं किं प्रयुक्तम् ?

(क) सगदगदम् (ख) तच्छ्रुत्वा (ग) उक्तवान् (घ) साश्रुनयनः

**उत्तराणि:-**

(i)- यूयम् (ii) विहाय (iii) भक्षयिष्यामः (iv) साश्रुनयनः

4- अथ अन्यस्मिन् अहनि स मेषो यावत् महानसं प्रविशति तावत् सूपकारेण अर्धज्वलित काष्ठेन ताडितः | ऊर्णाप्रचुरः मेषः वह्निना जाज्वल्यमान शरीरः निकटस्थां अश्वशालां प्रविशति दाह वेदनया च भूमौ लुठति | तस्य क्षितौ प्रलुठतः तृणेषु वह्निज्वालाः समुत्थिताः |

**एकपदेन उत्तरत-**

(i) सूपकारेण मेषः केन ताडितः ?

(ii) ऊर्णाप्रचुरः मेषः कुत्र प्रविशति ?

(iii) मेषः कस्मात् कारणात् भूमौ लुठति ?

(iv) मेषः केन अर्धज्वलित काष्ठेन ताडितः ?

(v) दाहवेदनया कः भूमौ लुठति ?

**उत्तराणि:-**

(i) अर्धज्वलितकाष्ठेन (ii) अश्वशालाम्

(iii) दाहवेदनया (iv) सूपकारेण

(v) मेषः

**पूर्णवाक्येन उत्तरत-**

(i) तृणेषुवह्निज्वालाः कथं समुत्थिताः ?

(ii) के मेषं ज्वलितकाष्ठेन ताडयन्ति स्म ?

(iii) ऊर्णाप्रचुराः जाज्वल्यमानशरीरः मेषः किं करोति ?

(iv) वह्निज्वालाः कुत्र समुत्थिताः ?

(v) मेषः किमर्थम् भूमौ लुठति ?

**उत्तराणि:-**

(i) मेषस्य क्षितौ प्रलुठतः तृणेषु वह्निज्वालाः समुत्थिताः |

(ii) सूपकाराः मेषं ज्वलितकाष्ठेन ताडयन्ति स्म |

(iii) ऊर्णाप्रचुराः जाज्वल्यमानशरीरः मेषः निकटस्थाम् अश्वशालां प्रविशति, दाहवेदनया च भूमौ लुठति |

(iv) वह्निज्वालाःतृणेषु समुत्थिताः |

(v) मेषः दाहवेदनया भूमौ लुठति |

**निर्देशानुसारं उत्तरत-**

(i) 'अन्यस्मिन्' इति पदस्य अत्र विशेष्यपदं किमस्ति ?

(क) काले (ख) अहनि (ग) दिने (घ) अथ

(ii) 'धरायाम्' अत्रइति पदस्य पर्यायपदं किमस्ति ?

(क) तृणेषु (ख) काष्ठेन (ग) भूमौ (घ) महानसं

(iii) 'दिने' इति अर्थे किं पदमत्र प्रयुक्तम् ?

(क) अन्यस्मिन् (ख) वह्नि (ग) रात्रौ (घ) अहनि

(iv) 'तस्य क्षितौ प्रलुठतः' अत्र'तस्य' इति सर्वनाम पदं कस्मै प्रयुक्तम् ?

(क) मेषाय (ख) अश्वाय (ग) नृपाय (घ) वानराय

**उत्तराणि:- (i)** अ- अहनि (ii) ग- भूमौ (iii) ख- अहनि (iv) क- मेषाय

5- ज्वालामालाकुलः अश्वः प्राणत्राणाय इतस्ततः अधावन् | तेषु केचिद् दग्धाः केचिद् अर्धदग्धाः केचन च पञ्चत्वं गताः| दग्धां हयशालां विज्ञाय सविषादः राजा शालिहोत्रान् वैद्यान् आहूय अपृच्छत् - 'हा! दग्धाः मे घोटकाः कथं रक्षणीयाः सपदि उपायः क्रियताम्|' तदा राजवैद्य प्रोवाच-

कपीनां मेदसा दोषो वह्निदाहसमुद्भवः|
अश्वानां नाशमभ्येति तमः सूर्योदये यथा ||

**भावार्थ(श्लोक)**- घोड़ों का आग के जलने से उत्पन्न शरीर - विकार बंदरों की चर्बी से उसी प्रकार नष्ट हो जाता है जिस प्रकार सूर्योदय होने पर अँधेरा नष्ट हो जाता है |

**एकपदेन उत्तरत-**

(i) दुःखी राजा कान् आहवयत् ?

(ii) अश्वाः किमर्थं इतस्ततः अधावन् ?

(iii) अश्वा प्राणत्राणाय कुत्र अधावन् ?

(iv) कदा तमः नश्यति ?

(v) कस्य घोटकाः रक्षणीयाः ?

**उत्तराणि:-**

(i) वैद्यान् (ii) प्राणत्राणाय (iii) इतस्ततः (iv) सूर्योदये (v) राज्ञः

**पूर्णवाक्येन उत्तरत-**

(i) राजवैद्य केषां मेदसा दग्धानां अश्वानां रक्षोपायं अवदत्?

(ii) दुःखी राजा वैद्यान् किं अपृच्छत्?

(iii) सूर्योदये किं नाशम् अभ्येति ?

(iv) कपीनां मेदसा कः नाशमभ्येति ?

(v) सविषादः राजा वैद्यान् आहूय किं अकथयत् ?

**उत्तराणि:-**

(i) राजवैद्यः कपीनां मेदसा दग्धानां अश्वानां रक्षोपायम् अवदत् |

(ii) दुःखी राजा वैद्यान् अपृच्छत् - हा! दग्धाः मे घोटकाः कथं रक्षणीयाः? इति|

(iii) सूर्योदये तमं नाशं अभ्येति |

(iv) कपीनां मेदसा वह्निदाह समुद्भवः दोषः नाशमभ्येति |

(v) सविषादः राजा वैद्यान् आहूय अश्वानां रक्षणाय उपायं कर्तुं अकथयत् |

**निर्देशानुसारं उत्तरत-**

(i) 'शीघ्रम्' इत्यस्य किं पर्यायपदं प्रयुक्तम्?

(क) सपदि (ख) केचन (ग) आहूय (घ) सविषादः

(ii) 'मे घोटकाः कथं रक्षणीयाः'- अत्र'मे' इति सर्वनामपदं कस्मै प्रयुक्तम् ?

(क) नृपाय (ख) वानराय (ग) अश्वाय (घ) वैद्याय

(iii) 'मृतः' इति अर्थे किं पदमत्र प्रयुक्तम् ?

(क) दग्धाः (ख) सविषादः (ग) पञ्चत्वम् (घ) सपदि

(iv) 'अधावन्' इति क्रियापदस्य कर्तृपदं किम्?

(क) वानराः (ख) अश्वाः (ग) मेषाः (घ) दग्धाः

**उत्तराणि:-**

(i) क- सपदि (ii) क- नृपाय (iii) ग- पञ्चत्वम् (iv) ख- अश्वाः

6- 'यथोचितं क्रियताम्' इति राजादेशं श्रुत्वा सर्वे भयत्रस्ताः कपयः अचिन्तयन्- "हा! हताः वयम् | अवधीरिताः अस्माभिः गुरुजनोपदेशाः |" उक्तम् हि -

मित्र रूपाः हि रिपवः सम्भाष्यन्ते विचक्षणैः |
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः ||

**भावार्थ(श्लोक)** - कल्याणकारक वचन को छोड़कर जो उससे उलट आचरण करने वाले होते हैं, विद्वानोंके द्वारा ऐसे व्यक्ति निश्चय ही मित्र के रूप में शत्रु कहे जाते हैं |

**एकपदेन उत्तरत-**

(i) हा! हताः वयम् इति के अचिन्तयन् ?
(ii) वानरैः के तिरस्कृताः?
(iii) के भयत्रस्ताः अभवन् ?
(iv) 'यथोचितं क्रियताम्' इति कः वदति ?

**उत्तराणि:-**

1- वानराः (ii) गुरुजनोपदेशाः (iii) वानराः (iv) राजा/नृपः

**पूर्णवाक्येन उत्तरत-**

(i) मित्ररूपाः हि रिपवः किं उत्सृजन्ति ?
(ii) राजादेशं श्रुत्वा वानराः किं अचिन्तयन् ?
(iii) ये गुरुजनोपदेशान् न पालयन्ति, ते कीदृशाः भवन्ति ?

**उत्तराणि:-**

(i) मित्ररूपाः हि शत्रवः हितं वाक्यम् उत्सृजन्ति |
(ii) राजादेशं श्रुत्वा वानराः अचिन्तयन् - " हा! हताः वयम् अवधीरिताः अस्माभिः गुरुजनोपदेशाः|"
(iii) ये गुरुजनोपदेशान् न पालयन्ति ते हताः इव भवन्ति |

**निर्देशानुसारं उत्तरत-**

(i) 'मृताः' इति पदस्य कः पर्यायः अत्र प्रयुक्तम् ?

(क) वयम् (ख) हताः (ग) श्रुत्वा (घ) उक्तम्

(ii) 'अस्माभिः' इति कर्तृपदस्य क्रियापदं किं ?

(क) उपदेशाः (ख) अवधीरिताः (ग) भयत्रस्ताः (घ) कपयः

(iii) 'विद्वद्भिः' इति अर्थे किं पदं श्लोके प्रयुक्तः?

(क) रिपवः (ख) मित्ररूपाः (ग) विचक्षणैः (घ) वाक्यम्

**उत्तराणि:-**

(i) ख- हताः (ii) ख- अवधीरिताः (iii) ग- विचक्षणैः

कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम् |
कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ||

**भावार्थ:-** महलों का अंत कलह के कारण होता है, मित्रता का अंत निंदनीय वचन के कारण हो जाता है | राष्ट्रों का अंत दुष्ट राजाओं के कारण हो जाता है तथा लोगों के यश का अंत उनके कुकर्म (निंदनीय कर्मों) के कारण हो जाता है |

**एकपदेन उत्तरत-**

(i) सौहृदम् कथं अन्तं गच्छति ?
(ii) हर्म्याणि केन नश्यन्ति ?
(iii) नृणाम् यशः केन नश्यति ?
(iv) कुकर्मणा केषां यशः नश्यति ?
(v) राष्ट्राणि कैः नष्टानि भवन्ति ?

**उत्तराणि:-**

(i) कुवचनेन (ii) कलहेन (iii) कुकर्मणा (iv) नृणाम् (v) कुराजभिः

**पूर्णवाक्येन उत्तरत-**

(i) नरस्य यशः कथं नश्यति ?
(ii) सौहृदम् केन नश्यति ?
(iii) कलहेन किं भवति ?

**उत्तराणि:-**

(i) नरस्य यशः कुकर्मणा नश्यति |
(ii) सौहृदम् कुवाक्येन नश्यति |
(iii) कलहेन हर्म्याणि नश्यन्ति |

**निर्देशानुसारं उत्तरत-**

(i) 'प्रासादाः' इति पदस्य समानार्थकम् पदं श्लोकात् चित्वा लिखत |
(ii) 'राष्ट्राणि'इति पदस्य विशेषणपदं किम्?
(iii) 'शत्रुता' इति पदस्य विलोमपदं किम्?

**उत्तराणि:-**

1- हर्म्याणि (ii) कुराजान्तानि (iii) सौहृदम्

**7- अधोलिखितानां पद्यानां अन्वयं लिखत -**

**(अ)** तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः |

तद्गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत् ||

**अन्वयः-** (i) ..........यत्र गृहे (ii) ........... अकारणः कलहः स्यात् (iii) ............. वाञ्छन् तद्गृहं (iv) ........... परिवर्जयेत्|

**मञ्जूषा-** जीवितं, दूरतः, तस्मात्, नित्यम्

**उत्तराणि:-**

(i) तस्मात् (ii) नित्यम् (iii) जीवितम् (iv) दूरतः

**(आ)** कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम् |

कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ||

**अन्वयः** - हर्म्याणि(i) ...............सौहृदम् च (ii) ................राष्ट्राणि(iii) ............... (iv) ............

यशः कुकर्मान्तम्(भवति) |

**मञ्जूषा-** नृणाम् , कलहान्तानि , कुराजान्तानि , कुवाक्यान्तं

**उत्तराणि:-**

(i) कलहन्तानि (ii) कुवाक्यान्तम् (iii) कुराजान्तानि (iv) नृणाम्

**(इ)** मित्ररूपाः हि रिपवः सम्भाष्यन्ते विचक्षणैः |

ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः ||

**अन्वयः** - ये हितं (i) ............ उत्सृज्य विपरीतोपसेविनः (भवन्ति ते) (ii) ............ मित्ररूपाः

(iii) ...............रिपवः(iv) ...............|

**मञ्जूषा** - विचक्षणैः, सम्भाष्यन्ते, हि, वाक्यम्

**उत्तराणि:-**

(i) वाक्यम् (ii) विचक्षणैः (iii) हि (iv) सम्भाष्यन्ते

**(ई)** कपीनां मेदसा दोषो वह्निदाहसमुद्भवाः|

अश्वानां नाशमभ्येति तमः सूर्योदये यथा ||

**अन्वयः** - (i) ............ वह्निदाहसमुद्भवाः (ii) ............ कपीनां मेदसा नाशम्(iii) ................ यथा(iv) .............तमः|

**मञ्जूषा-** सूर्योदये, अभ्येति, दोषः, अश्वानाम्

**उत्तराणि**:-

(i) अश्वानाम् (ii) दोषः (iii) अभ्येति (iv) सूर्योदये

**8- मन्जूषायाः सहायतया अधोलिखितानां श्लोकानां भावार्थेषु रिक्तस्थानानि पूरयत-**

(अ) मित्ररूपाः हि रिपवः सम्भाष्यन्ते विचक्षणैः |
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः ||

**भावार्थः-** बुद्धिमन्तः जनाः एतादृशान् जनान् मित्रस्य रूपे (i) ................. इव कथयन्ति ये
(ii) ............. वाक्यम् ण अनुसरन्ति अपितु (iii) .......................एव आचरन्ति सर्वदा
परेषां (iv) ............... एव कुर्वन्ति |

**मन्जूषा** - अहितम्, हितम्, विपरीतम्, रिपवः

**उत्तराणि-**

(i) रिपवः (ii) हितं (iii) विपरीतम् (iv) अहितम्

(आ) तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः |
तद्गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत् ||

**भावार्थः** - यदि कश्चित् नरः सुखम् जीवनं च इच्छति तर्हि सः तत् (i) ............. अवश्यमेव त्यजेत् यत्र
नित्यम् (ii) ............भवति| यतो हि (iii) .............. कलहः सर्वदा (iv) .............. कारणं भवति |

**मञ्जूषा-** अकारणः, विनाशस्य, कलहः, गृहम्

**उत्तराणि:-**

(i) गृहम् (ii) कलहः (iii) अकारणः (iv) विनाशस्य

**9- अधोलिखितेषु वाक्येषु रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणम् कुरुत-**

(क) राजपुत्राः वानरयूथं <u>भोज्यपदार्थैः</u> पुष्टिं नयन्ति स्म ।

(ख) अश्वाः <u>प्राणत्राणाय</u> इतस्ततः अधावन् ।

(ग) राजा <u>वैद्यान्</u> आहूय अश्वरक्षार्थं अपृच्छत्|

(घ) सूपकारेण मेषः <u>अर्धज्वलित काष्ठेन</u> ताडितः ।

(ङ) <u>प्राज्ञः</u> कलहयुक्तं गृहं दूरतः परिवर्जयेत् ।

(च) सूर्योदयः<u>तमः</u>नश्यति|

(छ) ज्वलन् मेषः <u>अश्वशालां</u> प्रविशति ।

(ज) <u>सूपकाराः</u> तम् आशु ताडयति स्म ।

(झ) एतेषाम् कलहो न <u>वानराणां</u> हिताय ।

(ञ) <u>राजगृहे</u> बालवाहनयोग्यं मेषयूथं आसीत् ।

(ट) ते सूपकाराः <u>काष्ठेन</u> तम् ताडयन्ति स्म ।

(ठ) <u>सयूथपः</u> सर्वान् कपीन् अवदत् ।

**उत्तराणि:-**

(i) कैः (ii) किमर्थम् (iii) कान् (iv) केन (v) कः (vi) किम् (vii) कुत्र (viii) के (ix) केषाम् (x) कुत्र (xi) केन (xii) कः

**10-अधोलिखितपङ्क्तिषु स्थूलाक्षरपदानां प्रसङ्गानुसारं शुद्धं अर्थम् चिनुत -**

(i) मेषः**महानसं** प्रविश्य यत् पश्यति तद् भक्षयति ।

(अ) हयशालाम् (आ) मन्दिरम् (इ) पाकशालाम् (ई) अश्वाम्

(ii) कलहान्तानि **हर्म्याणि** कुवाक्यान्तं च सौहृदम् ।

(अ) राजभवनानि (आ) उद्यानानि (इ) मन्दिराणि (ई) गृहाणि

(iii) अन्यस्मिन् **अहनि** महानसं प्रविष्टः मेषः सूपकारेण ताडितः ।

(अ) रात्रौ (आ) मार्गे (इ) दिवसे (ई) मेषे

(iv) तस्य **क्षितौ** प्रलुठतः तृणेषु वह्निज्वालाः समुत्थिताः ।

1- मार्गे (आ) भूमौ (इ) पाकशालायां (ई) आकाशे

(v) **सपदि** उपायः क्रियताम् ।

(अ) एकपदेन (आ) पादेन सह (इ) झटिति
(ई) एकदा

(vi) सूपकाराणां **मेषेन** सह कलहो भवति स्म ।

(अ) अश्वानां (आ) पाचकानाम् (इ) वानराणां (ई) एडकेन

(vii) राजा वैद्यान् **आहूय** अपृच्छत ।

(अ) प्रणम्य (आ) आह्वानं कृत्वा (इ) उक्त्वा (ई) शानया

(viii) अस्माभिः गुरुजनोपदेशाः **अवधीरिताः**।

(अ) धारिताः (आ) पालिताः (इ) तिरस्कृताः (ई) सम्मानिताः

(ix) यूथपः सर्वान् कपीन् आहूय **रहसि** अवदत् ।

(अ) अकस्मात् (आ) मनसि (इ) हृदये (ई) एकान्ते

(x) सूपकारः **मृण्मयं** पात्रम् गृहीत्वा मेषं अताडयत् ।

(अ) मृत्तिकामयम् (आ) स्वर्णमयं (इ) रजतमयम् (ई) काष्ठमयम्

**उत्तराणि:-**

(i) इ- पाकशालाम् (ii) आ- राजभवनानि (iii) इ- दिवसे (iv) आ- भूमौ
(v) इ- झटिति (vi) ई- एडकेन (vii) आ- आह्वानम् कृत्वा
(viii) इ- तिरस्कृताः (ix) ई- एकान्ते (x) अ- मृत्तिकामयम्

**11-रेखाङ्कित पदानां समस्तपदं विग्रहं वा लिखत -**

1- कस्मिन्श्चित नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म ।
2- राजपुत्राः वानरक्रीडारताःवानराणां यूथः, तम्नित्यमेव पुष्टिं नयन्ति स्म ।
3- तेषां मेषाणां मध्ये एक: मेषः जिव्हालोलुपः आसीत् ।
4- एकः मेषः जिव्हालोलुपतया महानसं प्रविशति स्म ।
5- एतद्राज्ञः भवनं परित्यज्य वनम् गच्छामः ।
6- जाज्वल्यमानं शरीरं यस्य सः मेषः अश्वशालां प्रविशति ।

**उत्तराणि:-**

(क) भूमिं पालयति इति
(ख) वानरयूथम्
(ग) मेषमध्ये
(घ) जिह्वायाः लोलुपतया
(ङ) राजभवनम्
(च) जाज्वल्यमानशरीरः

**12-(i) घटनाक्रमानुसारं अधोलिखितानि वाक्यानि पुनः लेखनीयानि -**

(क) सूपकारैः नित्यम् ताडितं मेषं दृष्ट्वा वानरयूथपः वानरान् राजभवनं त्यक्तुं अकथयत् |

(ख) राजा राजवैद्यं आहूय अश्वरक्षायैः न्यवेदयत् |

(ग) भूपतेः चन्द्रस्य पुत्राः वानरान् भोज्यपदार्थैः पुष्टिं नयन्ति स्म |

(घ) ज्वलन सः मेषः अश्वशालां प्रविष्टः | परिणामतः दग्धाः अश्वाः प्राणत्राणाय अधावन् |

(ङ) भयत्रस्ताः कपयः गुरुजनोपदेशस्य अवधीरणातः पश्चात्तापं कृतवन्तः |

(च) अन्यस्मिन् अहनि स मेषः सूपकारेण अर्धज्वलितकाष्ठेन ताडितः |

(छ) राजगृहे बालवाहनयोग्यः मेषः जिह्वालोलुपतया महानसं प्रविश्य भोजनं खादति स्म |

(ज) रसनास्वादलुब्धाः मदोद्धताः मर्कटाः तद्राजभवनं त्यक्तुं न् स्वीकृतवन्तः |

**उत्तराणि:-**

(i) भूपतेः चन्द्रस्य पुत्राः ..................................नयन्ति स्म |

(ii) राजगृहे बालवाहन योग्यं ...............................खादति स्म |

(iii) सूपकारैः नित्यम् ताडितं .............................त्यक्तुं अकथयत् |

(iv) रसना स्वाद लुब्धाः मदोद्धताः ............................न् स्वीकृतवन्तः |

(v) अन्यस्मिन् अहनि ........................ अर्धज्वलितकाष्ठेन ताडितः |

(vi) ज्वलन सः मेषः ......................... प्राणत्राणाय अधावन् |

(vii) राजा राजवैद्यं............................ न्यवेदयत्|

(viii) भयत्रस्ताः कपयः ............................ पश्चात्तापं कृतवन्तः |

## पञ्चमः पाठ-

## अभ्यासवशगंमन:

1 - अथ केन प्रयुक्तोऽयं पापं चरति पूरुष:|
अनिच्छन्न पिवार्ष्णेय!  बलादिव नियोजित:||

हिन्दीमेंअर्थ- अर्जुनबोले- हेकृष्णवंशी ! मनुष्य न चाहते हुए भी पाप कर्मों के लिए प्रेरित क्यों होता है ? ऐसा लगता है कि उसे बल पूर्वक उनमें लगाया जा रहा हो|

**एकपदेनउत्तरत-**

1- पूरुष: किंचरति ?

2- पापंक: चरति ?

**पूर्णवाक्येन उत्तरत-**

1- अत्र 'वार्ष्णेय'! ' इत्ययम् पदम् कस्मै प्रयुक्तम् ?

**भाषिक-कार्यम्-**

1- 'चरति' इत्यत्रक: धातु:?

2- अनिच्छन्न् इति पदस्य क: विग्रह:?

**उत्तराणि-**

1.पापं |

2.पूरुष: |

1.अत्र 'वार्ष्णेय'! इत्ययम् पदम् श्रीकृष्णाय प्रयुक्तम् |

1.चर्धातु: |

2. न इच्छन्न् इति |

2-ध्यायत: विषयान्पुंस: संगस्तेषू पजायते |
संगात्संजायतेकाम: कामात्क्रोधोऽभिजायते ||

हिन्दीमेंअर्थ- इंद्रियों के द्वारा विषयों का चिंतन करते हुए मनुष्यों की उनमें आसक्ति उत्पन्न हो जाती है और ऐसी आसक्ति से काम उत्पन्न होता है और फिर काम से क्रोध प्रकट होता है |

**एकपदेन उत्तरत-**

2- पुंस: कान्ध्यायते ?

3- काम: कस्मात् सन्जायते ?

**पूर्णवाक्येन उत्तरत-**

1- क्रोध : कस्मात् अभिजायते ?

**भाषिक-कार्यम्-**

1- 'संजायते' अत्रक: उपसर्ग: ?

2- 'तेषू पजायते' अत्र क: संधि:?

**उत्तराणि-**

1.विषयान् |

2. संगात् |

1. क्रोध : कामात् अभि जायते |

1.'संजायते' अत्र सम् उपसर्ग:|

दीर्घसंधि: |

3- क्रोधाद् भवति सम्मोह: सम्मोहात्स्मृतिविभ्रम: |
स्मृति भ्रंशादबुद्धि नाशो बुद्धिनाशात्प्रणश्यति ||

हिन्दी में अर्थ- क्रोध से पूर्ण मोह उत्पन्न होता है और मोह से स्मरण शक्ति का विभ्रम हो जाता है | जब स्मरण शक्ति भ्रमित हो जाती है, तो बुद्धि नष्ट हो जाती है और बुद्धि नष्ट हो जाने पर मनुष्य भव-कूप में पुन: गिर जाता है |

**एकपदेनउत्तरत-**

1 सम्मोह: कस्मात्जायते ?

2 स्मृति भ्रंशात् किं भवति ?

**पूर्णवाक्येन उत्तरत-**

1 सम्मोहात् किंभवति ?

**भाषिक-कार्यम्-**

1 'स्मृति भ्रंशाद्' अत्र का विभक्ति: ?

2 'प्रणश्यति' अत्रक: लकार :?

**उत्तराणि-**

1. क्रोधाद् |

2. बुद्धिनाश: |

1. सम्मोहात्स्मृति विभ्रम: भवति |

1. अत्र पंचमी विभक्ति: |

2. 'प्रणश्यति' अत्र लट्लकार : |

4- चञ्चलं हि मन: कृष्ण! प्रमाथि बलवद द्दृढम् |
तस्याहं निग्रहं मन्ये वायुरिव सुदुष्करम् ||

हिन्दी में अर्थ- हेकृष्ण! चूँकि मनचंचल (अस्थिर) , हठीला तथा अत्यंत बलवान है, अत: मुझे इसे वश में करना वायु को वश में करने से भी अधिक कठिन लगता है |

**एक पदेन उत्तरत-**

1 चञ्चलं किमस्ति ?

2 मन: निग्रहम् कीदृश भवति ?

**पूर्णवाक्येन उत्तरत-**

1.वायुरिव सुदुष्करम् किं भवति ?

**भाषिक-कार्यम्-**

2- 'सुदुष्करम्' अत्रक: उपसर्ग: अस्ति ?

3- 'तस्याहं' अत्रक: सन्धि : अस्ति ?

**उत्तराणि-**

1.मन: |

2.सुदुष्करम् |

1.वायुरिव सुदुष्करम्मन: निग्रह भवति |

1.'सुदुष्करम्' अत्र 'सु' उपसर्ग: अस्ति |

2. अत्रदीर्घ-सन्धि : अस्ति |

5. असंशयं महाबाह! मनोदुर्निग्रहंचलम् |
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ||

हिन्दी में अर्थ- श्री कृष्ण कहते है कि हे महाबाहु कुन्तीपुत्र! निस्सन्देह चंचल मन को वश मे ेकरना अत्यंत कठिन है, किन्तु उचित अभ्यास तथा विषय-विरक्ति के द्वारा ऐसा संभवहै |

**एकपदेन उत्तरत-**

1- 'महाबाहो' इत्ययं पदं कस्मै प्रयुक्तम् ?

2- 'चलम्' किमस्ति ?

**पूर्णवाक्येन उत्तरत-**

1- मन: कथंगृह्यते ?

**भाषिक-कार्यम्-**

1- 'महाबाहो' इत्यत्र क: समास: ?

2- 'अचलम्' इत्यस्य विपरीत पदं किम् ?

**उत्तराणि -**

1.अर्जुनाय |

2.मन: |

1. मन: अभ्यासेन वैराग्येण च गृह्यते |

1. 'महाबाहो' इत्यत्र बहुब्रीहि: समास: |

2.चलम् |

# राष्ट्रं संरक्ष्यमेव हि

**संस्कृते परिचयः**

*(विद्यालये बालचराणां शिविरम्। सायं सर्वे स्व–अनुभवान् श्रावयन्ति)*

**ध्रुवः** विचित्रः अयं संसारः। केचन महपुरुषाः महात्मागान्धिवत् अहिंसायाः पाठं पाठयन्ति। अन्ये च आणविक–अस्त्राणां निर्माणं विधाय जगतः संहारं कर्तुम् इच्छन्ति।

**सिद्धार्थः** वस्तुतः विज्ञानस्य सत्प्रयोगाः राष्ट्रस्य कल्याणाय, दुरुपयोगश्च विनाशाय भवति।

**सुश्रुतः** आम्, दुरुपयोगः तु अभिशापः एव।

**चरकः** विदितम् अस्ति किं युष्माकं यत् प्राचीनकाले अपि आणविक–अस्त्रणां मानवेषु प्रयोगः निषिद्धः आसीत्।

**ध्रुवः** किं पुरा अपि एतादृशानि अस्त्राणि आसन् येषां मानवेषु प्रयोगः वर्जितः आसीत्।

**सिद्धार्थः** किमिदं सत्यम्? आश्चर्यम्।

**चरकः** प्रत्यक्षं किं प्रमाणम्? 'राष्ट्रं संरक्ष्यमेव हि' अयं पाठः महाभारत–आधारितः। एतं पठित्वा ज्ञास्यामः।

## हिंदी अनुवाद

(विद्यालय में बालकों का शिविर। सायंकाल सभी अपने–अपने अनुभवों को सुनाते हैं)

**ध्रुव** यह संसार अनोखा है। कुछ महापुरुष महात्मा गाँधी की तरह अहिंसा के पाठ को पढ़ाते हैं और अन्य तो आणविक अस्त्रों का निर्माण करके संसार का विनाश करना चाहते हैं।

**सिद्धार्थ** वास्तव में विज्ञान का सही प्रयोग देश की रक्षा के लिए और दुरुपयोग विनाश के लिए होता है।

**सुश्रुत** जी हाँ, दुरुपयोग तो अभिशाप ही है।

**चरक** क्या तुम जानते हो पुराने समय में भी आणविक अस्त्रों का मानवों पर प्रयोग निषिद्ध था।

**ध्रुव** क्या प्राचीनकाल में भी ऐसे अस्त्र थे जिनका प्रयोग मानवों पर वर्जित था?

**सिद्धार्थ** क्या यह सच है? आश्चर्य है!

**चरक** प्रत्यक्ष को प्रमाण की क्या आवश्यकता है? ''राष्ट्रं संरक्ष्यमेव हि'' यह पाठ महाभारत पर आधारित है। इसे पढ़कर पता लगाएँगे।

**शब्दार्थाः**

**संहारम्**–विनाशम्, विनाश। **दुरुपयोगः**–कुत्सितः उपयोगः, बुरा उपयोग। **संरक्ष्यम्**–रक्षा–योग्यम्, रक्षा करने योग्य।

**समासाः**

अहिंसायाः – न हिंसायाः (नञ् तत्पुरुषः)।
सत्प्रयोगः – शोभनः प्रयोगः (कर्मधारयः)।
प्रत्यक्षम् – अक्ष्णोः प्रति (अव्ययीभावः)।
प्राचीनकाले – प्राचीने काले (कर्मधारयः)।
महापुरुषाः – महान्तः पुरुषाः (कर्मधारयः)।

**सन्धि–विच्छेदः**

प्रत्यक्षम् – प्रति + अक्षम् (यणसन्धिः)।
दुरुपयोगश्च – दुरुपयोगः + च (विसर्ग सन्धिः)।

**प्रत्ययाः**

संरक्ष्यम् – सम् + रक्ष् + यत्।
आणविक – अणु + ठक्।

| | |
|---|---|
| विदितम् – विद् + क्त। | विधाय – वि + धा + ल्यप्। |
| आधारितः – आ + धृ + क्त। | वर्जितः – वर्ज् + क्त। |
| पाठयन्ति – पठ् + णिच् + लट् लकारः। | निषिद्ध – नि + सिध् + क्त। |
| वस्तुतः – वस्तु + तसिल्। | श्रावयन्ति – श्रु + णिच् + लट् लकारः। |

**प्रश्नाः**

**(I) एकपदेन उत्तरत–**

(i) के स्व–अनुभवान् श्रावयन्ति? (ii) कस्य सत्प्रयोगः राष्ट्रस्य कल्याणाय भवति?

**(II) पूर्णवाक्येन उत्तरत–**

केषाम् प्रयोगः मानवेषु वर्जितः आसीत्?

**(III) भाषिककार्यम्–**

(i) 'एतादृशानि अस्त्राणि' अत्र विशेष्यपदम् किम्?

(क) अस्त्रणि (ख) अस्त्रम् (ग) एतादृशम् (घ) एतादृशानि

(ii) नाट्यांशात् 'ल्यप्' प्रतययस्य एकम् उदाहरणं चित्वा लिखत।

(क) विनाशाय (ख) कल्याणाय (ग) विधाय (घ) संरक्ष्यम्

(iii)'दुरुपयोगः' इति पदस्य विपर्ययः कः?

(क) सदुपयोगः (ख) सत्प्रयोगः (ग) सत्यप्रयोगः (घ) सदुपदेशः

(iv) 'विचित्रः' इति कस्य पदस्य विशेषणम्?

(क) राष्ट्रस्य (ख) विज्ञानस्य (ग) जगतः (घ) संसारस्य

(v) 'इच्छन्ति' इति क्रियायाः कर्तृपदं किम्?

(क) जनाः (ख) छात्राः (ग) अन्ये (घ) केचन

**उत्तराणि–** (I) (i) छात्राः (ii) विज्ञानस्य।

(II) आणविक–अस्त्राणां प्रयोगः मानवेषु वर्जितः आसीत्।

(III) (i) (क) अस्त्राणि (ii) (ग) विधाय (iii) (ख) सत्प्रयोगः (iv) (घ) संसारस्य (v) (ग) अन्ये।

**प्रश्ननिर्माणम् –** (i) अयं संसारः **विचित्रो** वर्तते।

(ii) अयं पाठः **महाभारते** आधारितः वर्तते।

(iii) **प्राचीने काले** आणविकास्त्राणां मानवेषु प्रयोगः निषिद्धः आसीत्।

(iv) **विज्ञानस्य** तु दुरुपयोगः अभिशापः एव।

(v) **पुरा** अपि एतादृशानि अस्त्रणि आसन्।

**उत्तराणि –** (i) कीदृशः (ii) कस्मिन् (iii) कदा (iv) कस्य (v) कानि।

**विपर्यय मेलनं कुरुत –**

| (क) शब्दा : | (ख) विपर्ययाः |
|---|---|
| (1) अहिंसायाः | (i) विनाशम् |
| (2) सत्प्रयोगः | (ii) वरदानम् |
| (3) विनाशाय | (iii) हिंसायाः |
| (4) प्रत्यक्षम् | (iv) सायम् |
| (5) अभिशापः | (v) कल्याणाय |

(6) निर्माणम् (vi) दुरुपयोगः

(7) प्रातः (vii) परोक्षम्

**उत्तराणि —** (1) (iii) हिंसायाः (2) (vi) दुरुपयोगः (3) (v) कल्याणाय (4) (vii) परोक्षम् (5) (ii) वरदानम् (6) (i) विनाशम् (7) (iv) सायम्।

## राष्ट्रं संरक्ष्यमेव हि
## (निश्चय से राष्ट्र की रक्षा करनी चाहिए)

**(1)**

(ततः पुत्रशोकसन्तप्ताः युधिष्ठिरः भीमः द्रौपदी च रणभूमौ प्रविशन्ति।)

**द्रौपदी** (दीर्घं निःश्वस्य) हा हन्त। किम् इदं घोरम् आपतितम्। पापकर्मणा द्रौणिना मे पुत्राः भ्रातरः च हताः। अग्निः इव दहति माम् अयं शोकः।

**युधिष्ठिरः** शुभे! धैर्यं धारय। नूनं तव पुत्राः वीरगतिम् एव प्राप्ताः। वीरजननी त्वं शोचितुं न अर्हसि।

**द्रौपदी** कथं कन्दभाग्या अहं धैर्यं धारयामि। यावत् असौ क्रूरकर्मा न दण्ड्यते, तावत् अहम् इतः न गमिष्यामि, अत्रैव प्राणत्यागं च करिष्यामि।

**युधिष्ठिरः** प्रियो! मा एवं ब्रूयाः स पापकर्मा कुत्र गतः, इति न जानीमः। अतिदूरं किञ्चिद् दुर्गमवनं प्रविष्टः भवेत्।

**द्रौपदी** (भीमं प्रति) आर्यपुत्र! क्षत्रधर्मम् अनुस्मरन् मां शोकसागरात् रक्ष। अस्मिन् संसारे कश्चित् अपि तवया सदृशः पराक्रमी नास्ति। पुरा वारणावते त्वमेव पाण्डवान् रक्षितवान्। विराट–नगरे अपि त्वं मां प्राणसंकटा् उद्धृतवान्।

## हिंदी अनुवाद

(तब पुत्रशोक से सन्तप्त युधिष्ठिर, भीम और द्रौपदी रणभूमि में प्रवेश करते हैं।)

**द्रौपदी** (लम्बी साँस लेकर) अरे! खेद है। यह कितना घोर पाप है। पापी द्रोणपुत्र ने मेरे पुत्र और भाई मार डाले। यह शोक मुझे आग की भाँति जला रहा है।

**युधिष्ठिर** कल्याणी! धैर्य धारण करो। निश्चित रूप से तुम्हारे पुत्र वीरगति को ही प्राप्त हुए हैं। वीरों की माता तुम शोक करने योग्य नहीं हो।

**द्रौपदी** मैं अभागिनी किस प्रकार धैर्य धारण करूँ। जब तक यह कुकर्मी दण्डित नहीं किया जाता, तब तक मैं यहाँ से नहीं जाऊँगी और यहीं पर प्राणत्याग करूँगी।

**युधिष्ठिर** प्रिये! ऐसा मत बोलो। वह पापी कहाँ गया, यह नहीं जानते। बहुत दूर किसी घने वन में प्रवेश कर गया हो।

**द्रौपदी** (भीम की ओर) आर्यपुत्र! क्षत्रिय धर्म का पालन करते हुए शोकसागर से मरी रक्षा करो। इस संसार में कोई भी तुम्हारे सदृश पराक्रमी नहीं है। पहले वारणावत में तुम्हीं ने पाण्डवों की रक्षा की थी। विराट–नगर में भी तुमने मुझे प्राणसंकट से बचाया था।

## शब्दार्थाः

**द्रौणिना —** द्रोणपुत्रेण, द्रोण के पुत्र द्वारा। **इतः—** अत्रत्यः, यहाँ से। **पराक्रमी** — वीरः, ताकतवर। **उद्धृतवान्—**रक्षितवान्, बचाया।

## समासाः

पुत्रशोकसंतप्ताः – पुत्राणाम् शोकः (षष्ठी तत्पुरुषः)। वीरगतिम् – वीराणाम् गतिम् (षष्ठी तत्पुरुषः)।

क्रूरकर्मा – क्रूरं कर्म यस्य सः (बहुव्रीहिः)। शोकसागरात् – शोकः सागरः इव, तस्मात् (कर्मधारयः)।
मन्दभाग्या – मन्दः भाग्यः यस्याः सा (बहुव्रीहिः)। वीरजननी – वीराणाम् जननी (षष्ठी तत्पुरुषः)।
क्षत्रधर्मम् – क्षत्राणाम् धर्मम् (षष्ठी तत्पुरुषः)। प्राणत्यागम् – प्राणनाम् त्यागम् (षष्ठी तत्पुरुषाः)।

**सन्धि–विच्छेदः**

अत्रैवः – अत्र + एव (वृद्धिसन्धिः)। किञ्चिद् – किम् + चित् (परसवर्ण सन्धिः)।
कश्चित् – कः + चित् (विसर्गसन्धिः)। उद्धृतवान् – उत् + धृतवान् (जश् सन्धिः)।

**प्रत्ययाः**

गतिम् – गम् + क्तिन्। शोचितुम् – शुच् + तुमुन्। अनुस्मरन् – अनु + स्मृ + शतृ।
प्रविष्टः – प्र + विश् + क्त। हताः – हन् + क्त। पराक्रमी – पराक्रम + इन्।
मन्दभाग्या – मन्दभाग्य + टाप्। गतः – गम् + क्त। प्राप्ताः – प्र + आप् + क्त।
सन्तप्ताः – सम् + तप् + क्त। रक्षितवान् – रक्ष् + क्तवतु।
उद्धृतवान् – उत् + धृ + क्तवतु।
निःश्वस्य – निस् + श्वस् + ल्यप्।

**प्रश्नाः**

**(I) एकपदेन उत्तरत–**

केन द्रौपद्याः पुत्राः हताः?

**(II) पूर्णवाक्येन उत्तरत–**

(i) कः संसारे परमपराक्रमी आसीत्।

(ii) के वीरगतिम् प्राप्ताः?

**(III) भाषिककार्यम् –**

(i) 'अनुस्मरन्' पदे कः प्रत्ययः?

(क) शानच् (ख) शतृ (ग) क्त (घ) क्तवतु

(ii) 'रक्षितवान्' क्रियापदस्य कर्तृपदं किम्?

(क) त्वम् (ख) त्वमेव (ग) वचम् (घ) अहम्

(iii) 'जानीमः' इति पदे का मूलधातुः?

(क) ज्ञा (ख) जन् (ग) जान् (घ) जा

(iv) 'मन्दभाग्या' इति कस्याः विशेषणम्?

(क) नार्याः (ख) जनन्याः (ग) राज्ञायाः (घ) द्रौपदृयाः

(v) 'त्वम् विराटनगरे अपि मां प्राणसंकटात् उद्धृतवान् आसीत्' इत्यत्र 'माम्' पदस्य प्रयोगः कस्मै अभवत्?

(क) भीमाय (ख) युधिष्ठिराय (ग) अर्जुनाय (घ) द्रौपद्यै

**उत्तराणि–** (I) द्रौणिना।

(II) (i) भीमः संसारे परमपराक्रमी आसीत्। (ii) द्रौपद्याः पुत्राः वीरगतिम् प्राप्ताः।

(III) (i) (ख) शतृ (ii) (क) त्वम् (iii) (क) ज्ञा (iv) (घ) द्रौपद्याः (v) (घ) द्रौपद्यै।

**प्रश्ननिर्माणम् –** (i) त्वमेव **पाण्डवान्** रक्षितवान्। (ii) तव पुत्राः **वीरगतिं** प्राप्ताः।

(iii) **द्रौणिना** मम पुत्राः हताः। (iv) माम् अयं **शोकः** अग्निः इव दहति।

**उत्तराणि—** (i) कान् (ii) किम् (iii) केन (iv) कः।

**(2)**

**भीमः** (युधिष्ठिरं प्रति) भ्रातः! द्रौणिम् अनुगन्तुं मह्यम् अनुमतिं ददातु भवान्।

**युधिष्ठिरः** गच्छ वत्स! विजयी भव, नकुलः तव सारथिः भवतु। (भीमसेनः निर्गच्छति, श्रीकृष्णः अर्जुनेन सह प्रविशति)

**श्रीकृष्णः** भो धर्मराज! समीचीनं न कृतं भवता। पुत्रशोकविह्वलः भीमसेनः एकाकी एव द्रौणिं हन्तुम् अभिधावति।

**युधिष्ठिरः** भगवन्! सः तु एकाकी एव द्रोणपुत्राय अलम्।

**श्रीकृष्णः** वत्स! न जानाति भवान् द्रौणेः चपलां प्रकृतिम्। पितुः द्रोणात् प्राप्तं ब्रह्मशिरो नाम अस्त्रं विद्यते तस्य पार्श्वे। यदि तत् प्रयुज्यते, सर्वा पृथ्वी दग्धा स्यात्।

**युधिष्ठिरः** अप्येवम्! आचार्येण कीदृशः अनर्थः कृतः। किं चपलबालकेभ्यः एतादृश—भीषणानाम् अस्त्राणां प्रदानम् उचितम्?

**हिंदी अनुवाद**

**भीमः** (युधिष्ठिर की ओर) भाई! द्रौणी का पीछा करने के लिए आप मुझे आज्ञा दें।

**युधिष्ठिर** जाओ वतस! विजयी हो, नकुल तुम्हारा सारथी हो।
(भीमसेन निकलता है, अर्जुन के साथ श्रीकृष्ण प्रवेश करता है।)

**श्रीकृष्ण** हे धर्मराज! आपने उचित नहीं किया। पुत्रशोक से दुःखी भीमसेन अकेला ही अश्वत्थामा को मारने के लिए उसका पीछा कर रहा है।

**युधिष्ठिर** भगवन्! व्ह तो अकेला ही द्रोणपुत्र के लिए पर्याप्त है।

**द्रौपदी** वत्स! आप अश्वत्थामा के चचंल स्वभाव को नहीं जानते। उसके पास पिता द्रोण से प्राप्त ब्रह्मशिरा नाम का अस्त्र है। उसे यदि प्रयोग किया जाए तो सारी पृथ्वी भस्म हो सकती है।

**युधिष्ठिर** ऐसा भी है! आचार्य ने केसा अनर्थ कर दिया। क्या चंचल बालों को ऐसे भीषण अस्त्र प्रदान करना उचित है।

### शब्दार्थाः

**अनुमतिम्** – आज्ञाम्, आदेश। **समीचीनं** – उचितम्, ठीक। **विह्वलः** – दुःखी, व्याकुल। **प्रकृतिम्** – स्वभावम् स्वभाव को।

### समासाः

धर्मराज – धर्मं राजते यः सः, सम्बोधने (बहुव्रीहिः)। अनर्थः – न अर्थः (नञ् तत्पुरुषः)।

चपलबालकेभ्य – चपलेभ्यः बालकेभ्यः (कर्मधारयः)।

पुत्रशोकविह्वल– पुत्रस्य शोकः (षष्ठी तत्पुरुषः), तेन विह्वलः (तृतीया तत्पुरुषः)।

### सन्धि—विच्छेदः

निर्गच्छति – निः + गच्छति (विसर्ग सन्धिः)। अप्येवम् – अपि + एवम् (यण् सन्धिः)।

### प्रत्ययाः

विजयी – विजय + इन्। हन्तु – हन् + तुमुन्। दग्धा – दह् + क्त + टाप्।

अनुगन्तुम् – अनु + गम् + तुमुन्। कृतम् – कृ + क्त। एकाकी – एकाक + इन्।

चपलाम् – चपल + टाप्।　　प्राप्तम् – प्र + आप् + क्त।　　प्रकृतिम् – प्र + कृ + क्तिन्।
प्रदानम् – प्र + दा + लयुट्।　　सर्वा – सर्व + टाप्।

**प्रश्नाः**

**(I) एकपदेन उत्तरत–**

(i) द्रौणेः स्वभावः कीदृशः अस्ति?

(ii) अर्जुनेन सह कः प्रविशति?

**(II) पूर्णवाक्येन उत्तरत–**

केभ्यः केषाम् प्रदानम् न उचितम्?

**(III) भाषिककार्यम्–**

(i) अत्र 'अलम्' योगे का विभक्तिः प्रयुक्ता?
(क) तृतीया　(ख) पञ्चमी　(ग) चतुर्थी　(घ) द्वितीया

(ii) 'सर्वा पृथ्वी' अनयोः पदयोः विशेषणपदम् किम्?
(क) सर्वा　(ख) पृथिवी　(ग) पृथ्वी　(घ) सर्व

(iii) 'समीपे' इत्यर्थे किं पदं प्रयुक्तम्?
(क) निकटे　(ख) पार्श्वे　(ग) निकषा　(घ) सामीप्ये

(iv) 'विजयी' पदस्य प्रयोगः कस्मै अभवत्?
(क) द्रौपद्यै　(ख) अर्जुनाय　(ग) श्रीकृष्णाय　(घ) भीमसेनाय

(v) 'जानाति' क्रियायाः कर्तृपदं किम्?
(क) भवान्　(ख) श्रीकृष्णः　(ग) द्रौणैः　(घ) प्रकृतिम्

(vi) 'नकुलः तव सारथिः भवतु' अत्र 'तव' सर्वनामपदस्य प्रयोगः कस्मै अभवत्?
(क) अर्जुनाय　(ख) श्रीकृष्णाय　(ग) भीमाय　(घ) नकुलाय

**उत्तराणि–** (I) (i) चपलः (ii) श्रीकृष्णः।
(II) चपलबालकेभ्यः एतादृश–भीषणानाम् अस्त्रणाम् प्रदानम् न उचितम्।
(III) (i) (ग) चतुर्थी (ii) (क) सर्वा (iii) (ख) पार्श्वे (iv) (घ) भीमसेनाय (v) (क) भवान् (vi) (ग) भीमाय।

**प्रश्ननिर्माणम्** – (i) सर्वा पृथ्वी **दग्धा** स्यात्।
(ii) नकुलः **तव** सारथिः भवत्।
(iii) भवान् द्रौणैः च **चपलां** प्रकृतिम् न जानाति।
(iv) अवक्रता **वाचि** अपि भवेत्।

**उत्तराणि –** (i) कीदृशी　(ii) कस्य　(iii) कीदृशीम्　(iv) कस्मिन्/कस्याम्।

(3)

**श्रीकृष्णः** शृणु तावत्, आचार्येण तु प्रियशिष्याय अर्जुनाय एव प्रीत्या मनसा ब्रह्मास्त्रशिक्षा प्रदत्ता किन्तु पुत्रप्रेम–पराधीनेन तेन अश्वत्थामा अपि तच्छिक्षया वञ्चितः न कृतः।

**अर्जुनः** अपरं च, अस्त्रशिक्षाप्रदानात् पूर्वम् आचार्यः पुत्रं सावधानम् अकरोत् यत्–

**परमापद्गतेनापि नैव तात त्वया रणे।**
**इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः।।1।।**

## हिंदी अनुवाद

**श्रीकृष्ण** तो सुनिए, आचार्य ने तो प्यारे शिष्य अर्जुन को ही प्रेम से (प्रसन्न होकर) ब्रह्मास्त्र शिक्षा प्रदान की थी किन्तु पुत्र–प्रेम के वशीभूत होकर उसने अश्वत्थामा को भी उस शिक्षा से वञ्चित नहीं किया।

**अर्जुन** और भी, अस्त्र शिक्षा देने से पूर्व आचार्य ने पुत्र को सावधान किया था कि –
हे पुत्र! अत्यधिक संकट आने पर भी तुम्हें रणभूमि में इस अस्त्र का प्रयोग विशेष रूप से मनुष्यों पर नहीं करना चाहिए।

**अन्वयः**

**परमापद्गतेनापि नैव तात त्वया रणे।**
**इदमस्वं प्रयोक्तव्यं मानुवेषु विशेषतः।।1।।**

तात! (i) .......................... अपि त्वया (ii) .................. इदम् अस्त्रम् (iii) .......................... मनुषेषु न (iv) ..................प्रयोक्तव्यम्।

**मञ्जूषा –** रणे, एव, परमापद्गतेन, विशेषतः

**उत्तराणि** – (i) परमापद्गतेन (ii) रणे (iii) विशेषतः (iv) एव।

## शब्दार्थाः

**प्रीत्या** – प्रेरणा, प्रेम से। **रणे** – युद्धे, युद्ध में। **परमापद्गतेन** – परविपदप्राप्तेन, अत्यधिक संकट में होने पर भी।

## संस्कृते भावार्थः

**परमापद्गतेनापि नैव तात त्वया रणे।**
**इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः।।1।।**

अर्थात् – (i) .................... शिक्षाप्रदानात् पूर्वम् आचार्यः द्रोणः स्वपुत्रम् सावधानम् कुर्वन् अकथयत् यत्–हे पुत्र! अत्यधिके (ii) ............................ आगते सति अपि त्वम् (iii) ........................ अस्य अस्त्रस्य प्रयोगम् विशेषरूपेण (iv) .......................... न कुर्याः।

**मञ्जूषा** – सङ्कटे, मनुष्येषु, रणभूमौ, ब्रह्मास्त्रस्य

**उत्तराणि –** (i) ब्रह्मास्त्रस्य (ii) सङ्कटे (iii) रणभूमौ (iv) मनुष्येषु।

## समासाः

ब्रह्मास्त्र शिक्षा – ब्रह्मास्त्रस्य शिक्षा (षष्ठी तत्पुरुषः)। प्रियशिष्याय – प्रियाय शिष्याय (कर्मधारयः)।
परमापद् – परमम् आपत् (कर्मधारयः)। सावधानम् – अवधानेन सह (अव्ययीभावः)।
पुत्रप्रेम पराधीनेनः – पुत्रस्य प्रेम (षष्ठी तत्पुरुषः), तस्य पराधीनेन (षष्ठी तत्पुरुषः)।

## सन्धि–विच्छेदः

ब्रह्मास्त्र – ब्रह्म + अस्त्र (दीर्घसन्धिः)। गतेनापि – गतेन : अपि (दीर्घसन्धिः)।
तच्छिक्षया – तत् + शिक्षया (छत्वसन्धिः)। नैव – न + एव (वृद्धि सन्धिः)।

## प्रत्ययाः

कृतः – कृ + क्त। प्रदत्ता – प्र + दा+ क्त + टाप् वञ्चितः – वञ्च् + क्त।

विशेषतः – विशेष + तसिल्। प्रयोक्तव्यम् – प्र + युज् + तव्यत्।

**प्रश्नाः**

**(I) एकपदेन उत्तरत–**

(i) आचार्येण प्रीत्या मनसा कस्मै ब्रह्मास्त्र–शिक्षा प्रदत्ता?

(ii) पुत्र–प्रेम पराधीनः कः आसीत्?

**(II) पूर्णवाकयेन उत्तरत–**

अस्त्रशिक्षाप्रदानात् पूर्वम् आचार्यः पुत्रं किम् अकथयत्?

**(III) भाषिककार्यम्–**

(i) अत्र 'आचार्यः' पदं कस्मै प्रयुक्तम्?

(क) द्रोणिने (ख) द्रोणाय (ग) गुरवे (घ) साधवे

(ii) 'इदम् अस्त्रम्' अत्र किम् विशेष्यपदम्?

(क) इदम् (ख) अस्त्रः (ग) अस्त्र (घ) अस्त्रम्

(iii) 'मनसा' इति पदं कस्याम् विभक्तौ अस्ति?

(क) प्रथमा (ख) द्वितीया (ग) तृतीया (घ) चतुर्थी

(iv) 'प्रियशिष्याय' इति कस्य पदस्य विशेषणम्?

(क) युधिष्ठिराय (ख) भीमाय (ग) अर्जुनाय (घ) नकुलाय

**उत्तराणि –** (I) (i) अर्जुनाय (ii) द्रोणाचार्यः।

(II) अस्त्रशिक्षाप्रदानात् पूर्वम् आचार्यः पुत्रम् अकथयत्–'तात! त्वया रणे परापद्गतेन अपि विशेषतः मानुषेषु इदम् अस्त्रं नैव प्रयोक्तव्यम्।'

(III) (i) (ख) द्रोणाय (ii) (घ) अस्त्रम् (iii) (ग) तृतीया (iv) (ग) अर्जुनाय।

**प्रश्ननिर्माणम् –** (i) आचार्येण प्रियशिष्याय अर्जुनाय ब्रह्मास्त्रं शिक्षित्।

(ii) सः अश्वत्थामाम् अपि वञ्चितं न कृतवान्।

(iii) आचार्यः पुत्रं सावधानम् अकरोत्।

(iv) इदम् अस्त्रं मानुषेषु न प्रयोक्तव्यम्।

**उत्तराणि –** (i) केन (ii) कम् (iii) कः (iv) केषु।

**(4)**

**युधिष्ठिरः** सम्प्रति आश्वस्तः अस्मि। मन्ये सः ब्रह्मास्त्रप्रयोगं न करिष्यति।

**श्रीकृष्णः** तर्हि न जानासि तस्य मनोवृत्तिम्। पितुः उपदेशेन असंतुष्टः स एकदा द्वारकापुरीम् आगच्छत्। ब्रह्मास्त्रं दत्त्वा सः सुदर्शनचक्रम् अवाञ्छत्।

**युधिष्ठिरः** (साश्चर्यम्) कथं चक्रम् इति!

**श्रीकृष्णः** आम्ः! म्या कथितम्। नाहं त्वत्तः ब्रह्मास्त्रम् इच्छामि। यदि त्वं मम गदां, शक्तिं, धनुः चक्रं वा इच्छसि, तुभ्यं ददामि।

**युधिष्ठिरः** ततस्ततः।

**श्रीकृष्णः** स तु चक्रम् एव अयाचत। गृहाण चक्रम् इति उक्तः सः सव्येन पाणिना चक्रम् गृहीतवान्, किन्तु सः तत् चक्रं स्वस्थानात् संचालयितुम् अपि समर्थः न अभवत्।

## हिंदी अनुवाद

**युधिष्ठिर** अब मैं आश्वस्त हूँ। मानता हूँ कि वह ब्रह्मास्त्र का प्रयोग नहीं करेगा।

**श्रीकृष्ण** तो उसकी मनोवृत्ति नहीं जानते। पिता के उपदेश से असन्तुष्ट होकर वह एक बार द्वारकापुरी आया था। ब्रह्मास्त्र मुझे देकर उसने सुदर्शनचक्र चाहा।

**युधिष्ठिर** (आश्चर्य सहित) क्या चक्र!

**श्रीकृष्ण** हाँ! मैंने कहा। मैं तुमसे ब्रह्मास्त्र नहीं चाहता हूँ। यदि तुम मेरी गदा, शक्ति, धनु अथवा चक्र चाहते हो, तुम्हें देता हूँ।

**युधिष्ठिर** तब—तब।

**श्रीकृष्ण** उसने तो चक्र ही माँगा। चक्र ले लो, इस प्रकार कहे जाने पर उसने बाएँ हाथ से चक्र ले लिया, किन्तु वह उस चक्र को अपने स्थान से चलाने में समर्थ नहीं हुआ।

## शब्दार्थाः

**आश्वस्तः** – विश्वस्तः, विश्वस्त। सव्येन पाणिना – वामेन हस्तेन, बाएँ हाथ से। समर्थः – योग्यः, समर्थ।

## समासाः

असंतुष्टः – न संतुष्टः (नञ् तत्पुरुषः)। सव्येन पाणिना – सव्यपाणिना (कर्मधारयः)।
मनोवृत्तिम् – मनसः वृत्तिम् (षष्ठी तत्पुरुषः)। साश्चर्यम् – आश्चर्येण सह (अव्ययीभावः)।
ब्रह्मास्त्रप्रयोगम् – ब्रह्मास्त्रस्य प्रयोगम् (षष्ठी तत्पुरुषः)।

## सन्धि – विच्छेदः

मनोवृत्तिम् – मनः + वृत्तिम् (विसर्ग सन्धिः)। ततस्ततः – ततः + ततः (विसर्ग सन्धिः)।
ब्रह्मास्त्रम् – ब्रह्म + अस्त्रम् (दीर्घ सन्धिः)। नाहम् – न + अहम् (दीर्घ सन्धिः)।

## प्रत्ययाः

दत्वा – दा + क्त्वा। उक्तः – वच् + क्त। कथितम् – कथ् + क्त।
गृहीतवान् – ग्रह् + क्तवतु। त्वत्तः – त्वत् + तसिल्।
संचालयितुम् – सम् + चल् + णिच् + तुमुन्।

## प्रश्नाः

**(I) एकपदेन उत्तरत**

(i) आश्वस्तः कः अस्ति? (ii) द्वारकापुरीम् कः आगच्छत्?

**(II) पूर्णवाक्येन उत्तरत –**

द्रोणपुत्रः किं कर्तुं समर्थः न अभवत्?

**(III) भाषिककार्यम्–**

(i) 'पाणिना' अस्य पदस्य विशेषणपदं किम्?
(क) वामेन (ख) दक्षिणेन (ग) सव्येन (घ) रक्षेण

(ii) 'दा' योगे अत्र का विभक्तिः प्रयुक्ता?
(क) चतुर्थी (ख) तृतीया (ग) पञ्चमी (घ) षष्ठी

(iii) 'तुभ्यम् ददामि'। अत्र 'तुभ्यम्' पदं कस्मै प्रयुक्तम्?
(क) द्रौणिने (ख) श्रीकृष्णाय (ग) युधिष्ठिराय (घ) अर्जुनाय

(iv) 'सव्येन पाणिना' इति अत्र विशेष्यपदं किम्?

(क) सव्येन (ख) पाणिना (ग) पाणिः (घ) सव्यः

(v) 'अधुना' इति अर्थे किं पदं प्रयुक्तम्?

(क) अद्य (ख) साम्प्रतम् (ग) सम्पत्ति (घ) सम्प्रति

(vi) 'अवाञ्छत्' इति क्रियायाः कर्तृपदं किम्?

(क) कः (ख) दत्वा (ग) सुदर्शनचक्रम् (घ) सः

**उत्तराणि –** (I) (i) युधिष्ठिरः (ii) सः/द्रोणपुत्रः।

(II) द्रोणपुत्रः चक्रं स्वस्थानात् संचालयितुम् समर्थः न अभवत्।

(III) (i) (ग) सव्येन (ii) (क) चतुर्थी (iii) (क) (द्रौणिने) (iv) (ख) पाणिना (v) (घ) सम्प्रति (vi) (घ) सः।

**प्रश्ननिर्माणम् –** (i) सः तु **चक्रम्** एव अयाचत।

(ii) **सः** सव्येन पाणिनां चक्रंगृहीतवान्।

(iii) स **ब्रह्मास्त्र–प्रयोगं** न करिष्यति।

(iv) नाहं **त्वत्तः** ब्रह्मास्त्रम् वाञ्छामि।

**उत्तराणि** – (i) किम् (ii) कः (iii) किम ˎ (iv) कस्मात्।

**(5)**

**युधिष्ठिरः** जानीमः भवतः दिव्यां शक्तिम्।

**श्रीकृष्णः** तदा अहं नैराश्येन खिन्नं पृष्टवान्, 'वत्स! किमर्थं त्वम् इदं दिव्यं चक्रं वाञ्छसि?

**युधिष्ठिरः** किम् उक्तं तेन?

**श्रीकृष्णः** सः प्रत्यवदत् –

**प्रार्थितं ते मया चक्रं देवदानवपूजितम्।**
**अजेयः स्यामिति विभो! सत्यमेतद् ब्रवीमि ते।।2।।**

अतोऽहं ब्रवीमि, तस्मिन् चञ्चले क्रूरे च द्रोणपुत्रे न विश्वसितव्यम्।

## हिंदी अनुवाद

**श्रीकृष्ण** आपकी दिव्य शक्ति को जानता हूँ।

**अर्जुन** तब मैंने निराशा से खिन्न अश्वत्थामा से पूछा, वत्स! तुम यह दिव्य चक्र किसलिए चाहते हो?

**युधिष्ठिर** उसने क्या कहा?

**श्रीकृष्ण** उसने उत्तर दिया – हे भगवान्! मैं अजेय हो जाऊँ, इसीलिए मैंने देवताओं और दानवों द्वारा पूजित चक्र आपसे माँगा है। यह आपसे सच बोल रहा हूँ।

इसीलिए मैं बोलता हूँ, उस चंचल और निर्दयी द्रोणपुत्र पर विश्वास नहीं करना चाहिए।

**अन्वयः**

**प्रार्थितं ते मया चक्रं देवदानवपूजितम्।**
**अजेयः स्यामिति विभो! सत्यमेतद् ब्रवीमि ते।।2।।**

विभो! (i) ........................ स्याम् इति (ii) ...................... देवदानव–पूजितम् (iii) ........................ ते प्रार्थितम्। एतत् ते (iv) .................... ब्रवीमि।

**मञ्जूषा** – मया, सत्यम्, अजेयः, चक्रम्

**उत्तराणि** – (i) अजेयः (ii) मया (iii) चक्रम् (iv) सत्यम्।

### शब्दार्थाः

**खिन्नं** – निराशम्, दुःखी। **क्रूरे** – दयाहीने, निर्दयी। **विभो** – हे व्यापक! हे शक्तिमान्।

### संस्कृते भावार्थः

**प्रार्थितं ते मया चक्रं देवदानवपूजितम्।**

**अजेयः स्यामिति विभो! सत्यमेतद् ब्रवीमि ते।।2।।**

अस्य भावोऽस्ति यत् – द्रोणपुत्रः (i) ........... अवदत्–हे सर्वव्यापक! (विभो!) अहम् अस्मिन् संसारे (ii) .................... स्याम् अतः अहम् त्वाम् देवदानवपूजितम् इदम् (iii) ................... प्रार्थितवान्। अहम् त्वाम् एतत् (iv) ...........वदामि।

**मञ्जूषा** – सत्यं, चक्रं, श्रीकृष्णम्, अजेयः

**उत्तराणि** – (i) श्रीकृष्ण् (ii) अजेयः (iii) चक्रं (iv) सत्यं।

### समासाः

दिव्यां शक्तिम् – दिव्यशक्तिम् (कर्मधारयः)।

अजेयः – न जेयः (नञ् तत्पुरुषः)।

दिव्यं चक्रम् – दिव्यचक्रम् (कर्मधारयः)।

देवदानवपूजितम् – देवैः दानवैः च पूजितम् (तृतीया तत्पूरुषः)।

### सन्धि–विच्छेदः

दिव्यां शक्तिम् – दिव्याम् + शक्तिम् (अनुस्वार सन्धिः)।

प्रत्यवदत् – प्रति + अवदत् (यण् सन्धिः)।

अतोऽहम् – अतः + अहम् (विसर्ग सन्धिः)।

चञ्चले – चम + चले (परसवर्ण सन्धिः)।

### प्रत्ययाः

उक्तम् – वच् + क्त।

विश्वसितव्यम् – वि + श्वस् + तव्यत्

पूजितम् – पूज् + क्त।

प्रार्थितम् – प्र + अर्थ् + क्त।

पृष्टवान् – पृष् + क्तवतु।

### प्रश्नाः

**(I) एकपदेन उत्तरत –**

(i) कः कृष्णस्य शक्तिम् जानाति?

(ii) 'स्यामिति' अत्र सन्धिः वर्णसंयोगो वा?

(iii) चञ्चलः क्रूरः च कः आसीत्?

**(II) पूर्णवाक्येन उत्तरत –**

(i) श्रीकृष्णः द्रोणपुत्रम् किम् प्रश्नम् पृच्छति?

(ii) चक्रं कैः पूजितम् अस्ति?

**(III) भाषिककार्यम् –**

(i) 'चञ्चलेः कस्य पदस्य विशेषणम्?

(क) श्रीकृष्णस्य (ख) भीमस्य (ग) द्रोणपुत्रस्य (घ) युधिष्ठिरस्य

(ii) 'दिव्याम् शक्तिम्, इति अत्र विशेषणपदं किम्?

(क) दिव्याम् (ख) शक्तिः (ग) शक्तिम् (घ) दिव्या

(iii) 'विश्वसितव्यम्' इति पदे का मूलधातुः?

(क) विश्वस् (ख) श्वस् (ग) वि (घ) तव्यम्

(iv) 'स्याम्' इति पदं कस्मिन् लकारे?

(क) लङ् (ख) लोट् (ग) लट् (घ) विधिलिङ्

**उत्तराणि –** (I) (i) युधिष्ठिर : (ii) वर्णसंयोगः (iii) द्रोणपुत्रः

(II) (i) 'वत्स! किमर्थं त्वम् इदं दिव्यं चक्रं वाञ्छसि?' (ii) चक्रं देवदानवैः पूजितम् अस्ति।

(III) (i) (ग) द्रोणपुत्रस्य (ii) (क) दिव्याम् (iii) (ख) श्वस् (iv) (घ) विधिलिङ्

**प्रश्ननिर्माणम् –** (i) भवतः **दिव्यां** शक्तिं जानीमः।

(ii) **अहं** खिन्नं द्रौणिं पृष्टवान्।

(iii) तस्मिन् **क्रूरे** द्रोणपुत्रे न विश्वसितव्यम्।

(iv) एतत् **ते** सत्यं ब्रवीमि।

**उत्तराणि –** (i) कीदृशीम् (ii) कः (iii) कीदृशे (iv) कम्।

**(6)**

(ततः युधिष्ठिरार्जुनौ श्रीकृष्णेन सह रथारोहणं नाटयतः।)

**अश्वत्थामा** रे दुष्ट भीम! त्वम् अद्य वध्योऽसि मया। (विलोक्य) अये कथं श्रीकृष्णार्जुनौ युधिष्ठिरश्च? (स्वगतम्) इदानीं किं करवाणि? आः, दृष्टम्, अस्मिन् विषमे समये ब्रह्मास्त्रम् एव मे शरणम्। मोचयामि अस्त्रम्। (ध्यानं नाटयति ब्रवीति च) इदम् अपाण्डवाय।

**श्रीकृष्णः** पार्थ पश्य, पश्य। एतद् विमुच्यते ब्रह्मास्त्रं द्रोणपुत्रेण! त्रैलोक्यं दहन् इव प्रचण्डज्वालः अग्निः परितः प्रसरति। अर्जुन! अर्जुन! त्वमपि मुञ्च ब्रह्मास्त्रं एतत् निवारयितुम्।

**हिंदी अनुवाद**

(तब युधिष्ठिर और अर्जुन श्रीकृष्ण के साथ रथ पर चढ़ने का अभिनय करते हैं।)

**अश्वत्थामा** रे दुष्ट भीम! तुम आज मेरे द्वारा मार दिए जाओगे। (देखकर) अरे क्या श्रीकृष्ण, अर्जुन और युधिष्ठिर? (मन में) अब क्या करूँ? अहा सोच लिया (देख लिया), इस विषम समय में ब्रह्मास्त्र ही मेरी शरण है। अस्त्र छोड़ रहा हूँ। (ध्यान लगाने का अभिनय करता है और बोलता है) यह पाण्डवों के विनाश के लिए हो।

**श्रीकृष्ण** पार्थ देखो, दखो, द्रोणपुत्र के द्वारा यह ब्रह्मास्त्र छोड़ा जा रहा है। तीनों लोकों को जलाती हुई–सी तेज लपटों वाली आग चारों तरफ फैल रही है। अर्जुन! तुम भी इसे रोकने के लिए (निवारण–हेतु) ब्रह्मास्त्र छोड़ो।

**शब्दार्थाः**

**विलोक्य** – दृष्ट्वा, देखकर। **स्वगतम्** – मनसि, मन में। **पार्थ** – अर्जुन, अर्जुन।

**समासाः**

रथारोहणम् – रथे (रथस्य) आरोहणम् (सप्तमी तत्पुरुषः)।

अपाण्डवाय – न पाण्डवाय (नञ् तत्पुरुषः)।

युधिष्ठिरार्जुनौ – युधिष्ठिरः च अर्जुनः च (द्वन्द्वः)।

प्रचण्डजवालः – प्रचण्डाः ज्वलाः यस्य सः (बहुव्रीहिः)।

**सन्धि–विच्छेदः**

वध्योऽसि – वध्यः + असि (विसर्ग सन्धिः)। रथारोहणम् – रथ + आरोहणम् (दीर्घ सन्धिः)।

**प्रत्ययाः**

वध्यः – वध् + यत्। दहन – दह् + शतृ। दृष्टम् – दृश् + क्त।

निवारयितुम् – नि + वृ + णिच् + तुमुन। विलोक्य – वि + लोक् + ल्यम्।

**प्रश्नाः**

**(I) एकपदेन उत्तरत –**

(i) केन ब्रह्मास्त्रम् विमुच्यते? (ii) श्रीकृष्णेन सह कौ प्रविशतः?

**(II) पूर्णवाक्येन उत्तरत –**

(i) अश्वत्थामा किम् ब्रवीति? (ii) कीदृशः अग्निः प्रसरति?

**(III) भाषिककार्यम् –**

(i) 'विषमे समये' अत्र विशेषणपदम् किम्?

(क) विषमे (ख) विषमं (ग) समयः (घ) समये

(ii) 'परितः' योगे का विभक्तिः भवति?

(क) प्रथमा (ख) तृतीया (ग) द्वितीया (घ) चतुर्थी

(iii) 'मे शरणम्' अत्र 'मे' पदं कस्मै प्रयुक्तम्?

(क) अर्जुनाय (ख) अश्वत्थामाय (ग) भीमाय (घ) श्रीकृष्णाय

(iv) 'करवाणि' इति पदं कस्मिन् लकारे?

(क) लट् (ख) लङ् (ग) विधिलिङ् (घ) लोट्

**उत्तराणि–** (I) (i) द्रोणपुत्रेण (ii) युधिष्ठिरार्जुनौ।

(II) (i) अश्वत्थामा ब्रवीति – इदम् अपाण्डवाय। (ii) त्रैलोक्यम् दहन् इव प्रचण्डज्वालः अग्निः परितः प्रसरति।

(III) (i) (क) विषमे (ii) (ग) द्वितीया (iii) (ख) अश्वत्थामाय (iv) (घ) लोट्।

**प्रश्ननिर्माणम्** – (i) **मया** त्वमद्य वध्योऽसि।

(ii) अर्जुन! त्वमपि **ब्रह्मास्त्रं** मुञ्च।

(iii) एतत् **द्रोणपुत्रेण** ब्रह्मास्त्रं विमुच्यते।

(iv) श्रीकृष्णेन सह **युधिष्ठिरार्जुनौ** रथारोहणं कुरूतः।

**उत्तराणि –** (i) केन (ii) किम् (iii) केन (iv) कौ।

(7)

**अर्जुनः** नमः भगवते। स्वस्ति आचार्यपुत्राय। स्वस्ति मे भ्रातृभ्यः। उत्सृज्यते मया ब्रह्मास्त्रम्। अस्त्रम् अस्त्रेण शाम्यताम्।

(ततः प्रविशतः व्यासनारदौ)

**नारदः** (व्यासं प्रति) पश्यतु भवान्। कोऽयम् अनर्थः क्रियते एताभ्यां वीराभ्याम्। समन्तात् वर्धमानाः प्रचण्डानलशिखाः आकाशं लिहन्ति इव। गगनात् सहस्रशः उल्काः भूमौ पतन्ति। कम्पते खलु

सपर्वत–वन–द्रुमा सकला मही। पवनः स्तब्धः जातः। सहस्रांशुः न भासते। शैलाः विदीर्यन्ते। कथमपि एतौ निवारणीयौ, अन्यथा सकलं जगद् ध्वस्तं भविष्यति।

**व्यासनारदौ** भौ वीरौ! संहरतम् संहरतम् निजास्त्रे।

**नारद** नानाशस्त्रविदः पूर्वे येऽप्यतीता महाराथाः।
नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन।।3।।
अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते।
समाः द्वादश पर्जन्यस्तद् राष्ट्रं नाभिवर्षति।।4।।

## हिंदी अनुवाद

**अर्जुन** भगवान को नमस्कार! आचार्यपुत्र का कल्याण हो! मेरे भाइयों का कल्याण हो! मेरे द्वारा ब्रह्मास्त्र छोड़ा जा रहा है। अस्त्र को अस्त्र द्वारा शान्त कर दिया जाए।

**नारद** (व्यास के प्रति) आप देखो। इन दोनों वीरों के द्वारा क्या अनर्थ किया जा रहा है। चारों ओर बढ़ती हुई तेज़ आग की लपटें आकाश को छू रही हैं। आकाश से हजारों उल्काएँ भूमि पर गिर रही हैं। सारी पृथ्वी पर्वतों, वनों और पेड़ों सहित काँप रही है। हवा स्तब्ध हो गई है। सूर्य नहीं चमक रहा है। पर्वत फट रहे हैं। किसी तरह इन दोनों को रोकना चाहिए, नहीं तो सारा संसार ध्वस्त हो जाएगा।

**व्यास और नारद** हे दोनों वीरो! अपने अस्त्र रोक लो, रोक लो।

**नारद** पूर्व काल में जो भी अनेक अस्त्र के ज्ञाता महारथी हुए हैं उनके द्वारा यह अस्त्र मनुष्यों पर किसी प्रकार भी प्रयोग नहीं किया गया। जहाँ ब्रह्मास्त्र को दूसरे महान अस्त्र से नष्ट किया जाता है। उस देश में बादल बारह साल तक नहीं बरसता।

### अन्वयः

**नानाशस्त्रविदः पूर्वे येऽप्यतीता महाराथाः।**
**नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन।।3।।**

नाना (i) ........................ ये अपि पूर्वे (ii) ............. अतीता।, तैः एतद् (iii) ............. मनुष्येषु (iv) ......... ............ न प्रयुक्तम् ।।3।।

**मञ्जूषा** – महारथाः, अस्त्रम्, शस्त्रविदः, कथञ्चन।

**उत्तराणि –** (i) शस्त्रविदः (ii) महारथाः (iii) अस्त्रम् (iv) कथञ्चन।

**अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते।**
**समाः द्वादश पर्जन्यस्तद् राष्ट्रं नाभिवर्षति।।4।।**

(i) ........................ ब्रह्मशिरः अस्त्रं (ii) ................. वध्यते, (iii) ............................ द्वादशसमाः तद् (iv) .................... न अभिवर्षति।।4।।

**मञ्जूषा –** राष्ट्रम, यत्र, पर्जन्यः, परमास्त्रेण।

**उत्तराणि** – (i) यत्र (ii) परमास्त्रेण (iii) पर्जन्यः (iv) राष्ट्रम्।

### शब्दार्थाः

**स्वस्ति** – कल्याणम् अस्तु, कल्याण हो। **समन्तात्** – सर्वतः, चारों ओर से। **सकला** – समस्ता, सारी। मही – भू, पृथ्वी। **सहस्रांशुः** – भास्करः, सूर्य। **संहरतम्** – विनाश्यतम्, समेट लो।

### संस्कृते भावार्थः

**नानाशस्त्रविदः पूर्वे येऽप्यतीता महाराथाः।**
**नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन।।3।।**

**अस्य भावोऽस्ति यत्** – नारदः (i) ............ अर्जुनम् च कथयति यत् हे वीरौ युवाम् (ii) ....................... संहरतम् यतोहि पूर्वे ये अपि (iii) .............. महावीराः अभवन् तेऽपि कदापि एतत् अस्त्रम् (iv) ................ न प्रयुक्तवन्तः ।।3।।

**मञ्जूषा –** निजास्त्रे, नानाशस्त्रज्ञातारः, मनुष्येषु, द्रोणपुत्रम्।

**उत्तराणि** – (i) द्रोणपुत्रम् (ii) निजास्त्रे (iii) नानाशस्त्रज्ञातारः (iv) मनुष्येषु।

**अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते।**
**समाः द्वादश पर्जन्यस्तद् राष्ट्रं नाभिवर्षति।।4।।**

अर्थात् – यत्र (i) .......................... नाम अस्त्रं परमास्त्रेण नश्यते (ii) ................ राष्ट्रे मेघाः द्वादश वर्षाणि न (iii) ................। अर्थात् अस्य अस्त्रस्य प्रयोगेण तु (iv) ..................... विनश्यति।

**मञ्जूषा** – जीवनमेव, ब्रह्मशिरः, तस्मिन्, अभिवर्षन्ति

**उत्तराणि** – (i) ब्रह्मशिरः (ii) तस्मिन् (iii) अभिवर्षन्ति (iv) जीवनमेव।

### समासाः

प्रचण्डानलशिखाः–प्रचण्डस्य अनलस्य शिखाः (षष्ठी तत्पुरुषः)।

परमास्त्रेण – परमेण अस्त्रेण(कर्मधारयः)।
सहस्रांशुः – सहस्रशः अंशवः यस्य सः (बहुव्रीहिः)।

व्यासनारदौ – व्यासः च नारदः च (द्वन्द्वः)।
सपर्वत – पर्वतेण सह (अव्ययीभावः)।

### सन्धि–विच्छेदः

कोऽयम् – कः + अयम् (विसर्गसन्धिः)।
प्रचण्डानल – प्रचण्ड + अनल (दीर्घसन्धिः)।

कथञ्चन – कथम् + चन (परसवर्ण सन्धिः)।
परमास्त्रेण – परम + अस्त्रेण (दीर्घसन्धिः)।

नाभिवर्षति – न + अभिवर्षति (दीर्घसन्धिः)।
पर्जन्यस्तद् – पर्जन्यः + तद् (विसर्गसन्धिः)।

नैतदस्त्रम – न + एतत् (वृद्धिसन्धिः) + अस्त्रम् (जश् सन्धिः)।

येऽप्यतीता – ये + अपि (पूर्व रूप) + अतीता (यण्सन्धिः)।

**प्रत्ययाः**

वर्धमानाः – वृध् + शानच्। निवारणीयौ – नि + वृञ् + अनीयर्। प्रयुक्तम् – प्र + युज् + क्त।

**प्रश्नाः**

**(I) एकपदेन उत्तरत–**

(i) अत्र नाट्यांशे नारदः कति श्लोकौ पठति?

(ii) 'पृथ्वी' इत्यर्थे नाट्यांशे किं पदं प्रयुक्तम्?

**(II) पूर्णवाक्येन उत्तरत–**

(i) अर्जुनः कस्मै नमस्करोति?

(ii) अनर्थः काभ्याम् क्रियते?

**(III) भाषिककार्यम्–**

(i) 'जगद्' इत्यस्य पदस्य विशेषणपदम् किम्?

(क) समस्तम् (ख) सकलम् (ग) सम्पूर्णम् (घ) सरलम्

(iii) **अस्त्रम्** अस्त्रेण शाम्यताम्। (iv) **द्रौणेः** अस्त्रं सर्वान् प्रयक्ष्यति एव।

**उत्तराणि –** (i) केन (ii) कीदृशम् (iii) किम् (iv) कस्य।

# सप्तमः पाठः

# साधुवृत्तिं समाचरेत्

**अधोलिखितान् गद्यांशान्  पठित्वा तदाधारितानां प्रश्ननानामुत्तराणि लिखत-**

1. अथ व्रजन्तौ तौ गर्तसंकुले मार्गे क्रीडतः कांश्चित् बालकान् प्रेक्ष्य अवदताम् - भो भो बालकाः ! कथमत्र नतोन्नते विषमे मार्गे क्रीडथ? यदि कश्चिद् गर्ते पतेत् तर्हि सः विकलाङ्गो भूत्वा चिरं क्लेशम् अनुभवेत् | तच्छ्रुत्वा तेषुकश्चित् उद्दण्डः बालकः उवाच - अयि भो ! यद्येवं तर्हि कथं भवन्तौ सुपथं परित्यज्य अनेन कुपथेन गन्तुं प्रवृतौ ? अपि इदम् श्रेयस्करम् ?

**I. एकपदेन उत्तरत -**

(i) बालकाः कीदृशे मार्गे क्रीडन्ति स्म ?

(ii) तौ केन गन्तुं प्रवृत्तौ ?

(iii) कुपथेन कौ गन्तुं प्रवृत्तौ ?

**IIपूर्णवाक्येन उत्तरत -**

(i) तौबालकान् प्रेक्ष्य किम् अवदताम् ?

(ii) कश्चिद् गर्ते पतित्वा किम् अनुभवेत् ?

(iii) उद्दण्डः बालकः किम् उवाच?

**III निर्देशानुसारम् उत्तरत -**

(i) 'अवदताम्' इति क्रियायाः कर्तृपदं किम् ?

(ii) 'क्रीडतः बालकान्' अनयोः पदयोः विशेषणं किम् ?

(iii) अनुच्छेदे'दृष्ट्वा' इति पदस्य पर्यायः कः ?

2. अस्तिकर्मपुर नाम्नि नगरे प्रच्छन्न भाग्य - नामधेयः कश्चित् कुमारः | बाल्ये वयसि विद्या पराङ्मुखः सः केनचित् दुष्टबुद्धि नाम्ना चौरेण सः चौर्यकर्मणि निरतः सञ्जातः| एकदासः दुष्टबुद्धिना सार्धं कस्यचित् श्रेष्ठिनः गेहे धनहरणार्थं ग्रामान्तरं प्रस्थितः |

**I. एकपदेन उत्तरत -**

(i) कर्मपुरनगरे किं नामधेयः कुमारः अवसत्?

(ii) कुमारःकेन सह चौरकर्मणि निरतः सञ्जातः?

(iii) कर्मपुरनगरे प्रच्छन्नभाग्य - नामधेयः कः अस्ति?

**II पूर्णवाक्येन उत्तरत -**

(i) प्रच्छन्नभाग्यः दुष्टबुद्धिना सार्धं किमर्थंप्रस्थितः?

(ii)कीदृशः प्रच्छन्नभाग्यः चौर्यकर्मणि निरतः सञ्जातः?

(iii) एकदासःकुमारः दुष्टबुद्धिना सार्धं कुत्र प्रस्थितः?

**III निर्देशानुसारम् उत्तरत -**

(i) 'सञ्जातः' इतिक्रियापदस्य कर्तृपदं किम् अस्ति?

(ii) 'कस्यचित् श्रेष्ठिनः' इत्यनयोः पदयोःविशेषणपदम् किम्?

(iii) अनुच्छेदे 'आयुषि' इति पदस्य पर्यायः कः ?

3. अनेन वचसा प्रतिहतान्तः करणः प्रच्छन्न भाग्यः अचिन्तयत्- किम् इदम् वचनं विशेषेण माम् एव लक्ष्यीकरोति? अहो! कुमार्गम् आश्रितस्य मम कीदृशी इयं क्लेशपरम्परा | गुरूपदेशेन इव अनेन बालवचसा मम चक्षुषी समुन्मीलिते | अद्य आरभ्य पापपथं त्यजामि इति विचिन्त्य मित्रं दुष्टबुद्धिम् अवदत्'सखे! यदि मां मित्रस्थाने परिगणयसि, तर्हि साधुजनगर्हितम् इमं पन्थानं त्यजतु भवान् |' दुष्टबुद्धिःतु तस्य सद्वचनानि तिरस्कृत्य ग्रामाभिमुखं प्राचलत् | प्रच्छन्नभाग्यः तु समुपजातविवेकः स्वगृहं प्रतिनिवृत्तः|

**I. एकपदेन उत्तरत -**

(i) अद्यप्रभृति पापपथं त्यजामि | इतिकः अचिन्तयत् ?

(ii) कीदृशः प्रच्छन्नभाग्यः स्वगृहं प्रतिनिवृत्तः?

(iii)पापपथं कः त्यजति?

**II पूर्णवाक्येन उत्तरत -**

(i) सद्वचनानि तिरस्कृत्य दुष्टबुद्धिः कुत्र अगच्छत् ?

(ii) बालवचसा कस्य चक्षुषी समुन्मीलिते?

(iii) बालवचसा प्रच्छन्नभाग्यः कीदृशः अभवत्?

**III निर्देशानुसारम् उत्तरत -**

(i) 'चक्षुषी' इति कर्तृपदस्य क्रियापदं किम् अस्ति?

(ii) अनुच्छेदे 'पन्थानम्' इति विशेष्यपदस्य विशेषणपदम् अस्ति |

(iii) अनुच्छेदे 'निन्दितम्' इति पदस्य पर्यायः कः ?

## <u>साधुवृत्तिं समाचरेत्</u>

### उत्तरम्

**1.I. एकपदेन उत्तरत -**

(i) गर्तसंकुले (ii) कुपथेन (iii) भवन्तौ

**IIपूर्णवाक्येन उत्तरत -**

(i) तौ अवदताम् - भो भो बालकाः ! कथमत्र नतोन्नते विषमे मार्गे क्रीडथ?

(ii) सः विकलाङ्गो भूत्वा चिरं क्लेशम् अनुभवेत् |

(iii) बालकः उवाच - अयि भो ! यद्येवं तर्हि कथं भवन्तौ सुपथं परित्यज्य अनेन कुपथेन गन्तुं प्रवृतौ ?

**III निर्देशानुसारम् उत्तरत -**

(i) तौ (ii) क्रीडतः (iii) प्रेक्ष्य

**2.I. एकपदेन उत्तरत -**

(i) प्रच्छन्नभाग्यः (ii) दुष्टबुद्धिना (iii) कुमारः

**IIपूर्णवाक्येन उत्तरत -**

(i) प्रच्छन्नभाग्यः दुष्टबुद्धिना सह चौर्यकर्मणि निरतः प्रस्थितः |

(ii) बाल्ये वयसि विद्या पराङ्मुखः प्रच्छन्नभाग्यः केनचित् दुष्टबुद्धिनाम्ना चौरेण सः चौर्यकर्मणि निरतः सञ्जातः|

(iii) कुमारः दुष्टबुद्धिना सार्धं कस्यचित् श्रेष्ठिनः गेहे धनहरणार्थं ग्रामान्तरं प्रस्थितः |

**III निर्देशानुसारम् उत्तरत -**

(i) सः (ii) श्रेष्ठिनः (iii) वयसि

**3.I.एकपदेन उत्तरत -**

(i) प्रच्छन्नभाग्यः (ii) समुपजातविवेकः (iii) प्रच्छन्नभाग्यः

**IIपूर्णवाक्येन उत्तरत -**

(i) दुष्टबुद्धिः तु तस्य सद्वचनानि तिरस्कृत्य ग्रामाभिमुखं अगच्छत् ।

(ii) बालवचसा प्रच्छन्न भाग्यस्य चक्षुषी समुन्मीलिते |

(iii) बालवचसा प्रच्छन्न भाग्यःसमुपजातविवेकःअभवत् ।

**III निर्देशानुसारम् उत्तरत -**

(i) समुन्मीलिते (ii) साधुजनगर्हितम् (iii) गर्हितम्

## अष्टमः पाठः

## तिरुक्कुरल-सूक्ति-सौरभम्

**पिता यच्छति पुत्राय बाल्ये विद्याधनं महत्।**
**पिताऽस्य किं तपस्तेपे इत्युक्तिस्तत्कृतज्ञता।।1।।**

**I एकपदेनउतरत-**

(i) पिता पुत्राय किं यच्छति?

(ii) पिता कस्मै तप: तेपे?

(iii) क: पुत्राय विद्याधनं यच्छति?

(iv) महत् किं अस्ति ?

**II पूर्णवाक्येन उत्तरत-**

(i) कृतज्ञता का भवति?

(ii) पिता कदा विद्याधनं यच्छति?

(iii) बाल्ये क: कस्मै विद्या धनं यच्छति?

**(**iv)किं धनंमहत् अस्ति ?

**III निर्देशानुसारं उत्तरत-**

**(i)** 'यच्छति' क्रियाया कर्तृपदं किम्?

(ii)'विद्याधनं महत्' अनयो: पदयो: विशेषणं किम्?

(iii) श्लोके 'कृतघ्नता' पदस्य क: विपर्यय प्रयुक्त:?

(iv) "अस्य" इति सर्वनामपदं श्लोके कस्मै प्रयुक्तम् ?

(v) "महत्" इति पदं कस्य पदस्य विशेषणम् ?

**अवक्रता यथा चित्ते तथा वाचि भवेद् यदि।**
**तदेवाहुः महात्मानः समत्वमिति तथ्यतः।।2।।**

**I एकपदेनउतरत-**

(i) महात्मन: चित्ते किं भवेत्?

(ii)यथा अवक्रता चित्ते भवति तथैव कुत्र भवेत् ?

(iii)कस्य चित्ते अवक्रता भवेत् ?

(iv) वाचि  किं भवेत् ?

**II पूर्णवाक्येन उतरत-**

(i) चित्ते वाचि च  अवक्रता महात्माभि: किं कथ्यते ?

(ii)जनानां वाचि का भवेत् ?

(iii) केषाम् वाचि अवक्रता भवेत् ?

(iv) अवक्रता कुत्र भवेत् ?

**III निर्देशानुसारं उतरत-**

(i) "वक्रता" इत्यस्य पदस्य विपर्यय पदं किम् ?

(ii)"भवेद्" इति क्रियापदस्य कर्तृपदं किम् ?

(iii)"मनसि" इति पदस्य क: पर्याय श्लोके आगत: ?

(iv)"आहु" इति क्रियापदस्य कर्तृपदं किं अस्ति ?

(v) "वाण्याम्"इति पदस्य किं पर्यायपदं अत्र प्रयुक्तम् ?

**त्यक्त्वा धर्म प्रदां वाचं परुषां योऽभ्युदीरयेत्।**
**परित्यज्य फलं पक्वं भुङ्क्तेऽपक्वं विमूढधीः।।3।।**

**I एकपदेन उतरत-**

(i) विमूढ़धी: धर्मप्रदां वाचं त्यक्त्वा कीदृशीम् अभ्युदीरयेत् ?

(ii) विमूढ़धी: कीदृशम् फलं परित्यजति ?

(iii) क: धर्मप्रदां वाचं त्यक्त्वा परुषां अभ्युदीरयेत् ?

(iv) अपक्वं फलं क: भुंङ्क्ते ?

**II पूर्णवाक्येन उतरत-**

(i) क: विमूढ़धी: भवति ?

(ii) क: धर्मप्रदां वाचं त्यजति ?

(iii) क: परुषांवाचं अभ्युदीरयेत् ?

(iv)विमूढ़धी: कीदृशम् फलं भुंङ्क्ते ?

**III निर्देशानुसारं उतरत-**

(i) “पक्वं” इत्यस्य पदस्य विपर्यय पदं किम् ?

(ii) श्लोके ”यो” इति कर्तृपदस्य क्रियापदं किम् ?

(iii)’फलं पक्वं” अनयो: पदयो: विशेषणपदं  किम् ?

(iv) “भुंङ्क्ते” इति क्रियापदस्य कर्तृपदं किम् ?

(v) ”धर्मप्रदाम्“ इति विशेषणपदस्यकिं विशेष्यपदम् ?

**विद्वांस एव लोकेऽस्मिन् चक्षुष्मन्तः प्रकीर्तिताः।**
**अन्येषां वदने ये तु ते चक्षुर्नाम नीमते।।4।।**

**I एकपदेनउतरत-**

(i) लोकेऽस्मिन् के चक्षुष्मन्तः प्रकीर्तिताः?

(ii)अन्येषां वदने के नामनीमते ?

(iii)केषां वदने चक्षु: नामनीमते ?

(iv) विद्वांस: कथं प्रकीर्तिताः?

**II पूर्णवाक्येन उतरत-**

(i) अस्मिन्  लोके विद्वांस: कीदृशा: स्मृता:?

(ii) अन्येषां कस्मिन् स्थाने चक्षुनामनी मते ?

(iii) विद्वांस: कुत्र कीदृशा: स्मृता:?

(iv) कुत्र विद्वांस: चक्षुष्मन्तःप्रकीर्तिताः?

**III निर्देशानुसारं उतरत-**

(i) “लोकेऽस्मिन्” अत्र विशेष्यपदं किम् ?

(ii) “मूर्खा:” अस्य पदस्य विपर्ययपदं अत्र किं प्रयुक्तम् ?

(iii)“ते चक्षुष्मन्तः प्रकीर्तिताः” अत्र क्रियापदं किम् ?

(iv) “मुखे” इति अर्थे श्लोके किं पदं प्रयुक्तम् ?

(v)”नेत्रवन्त:” इति अर्थे श्लोके किं पदं प्रयुक्तम् ?

**यत्प्रोक्तं येन केनापि तस्य तत्त्वार्थ निर्णयः।**
**कर्तुं शक्यो भवेद् येन स विवेक इतीरितः।।5।।**

**I एकपदेन उतरत-**

(i) जन: किं कर्तुं शक्यते ?

(ii) जनै: केन तत्वार्थ निर्णय: कर्तुं शक्यते ?

(iii) तत्वार्थ निर्णय: कर्तुं क: शक्यते ?

(iv) स: किं इति ईरित:?

**II पूर्णवाक्येन उतरत-**

(i) विवेक: क: भवति ?

(ii) क: तत्वार्थ निर्णय: कर्तुं शक्नोति ?

(iii)यत्प्रोक्तं येनकेनापि तस्य तत्त्वार्थ निर्णयः क: ईरित: ?

(iv) कस्य तत्वार्थ निर्णय: विवेकेन कर्तुं शक्यो भवेत् ?

**III निर्देशानुसारं उतरत-**

(i)श्लोकस्य “प्रोक्तं '' इति क्रियाया: कर्तृपदं किम् ?

(ii) “कथितम् ” इत्यस्य पदस्य पर्यायपदं अत्र किं प्रयुक्तम् ?

(iii) श्लोके ”स:” इति कर्तृपदस्य क्रियापदं किम् ?

(iv) “अनुक्तम्” इति पदस्य विलोमपदं किं प्रयुक्तम् ?

(v) ”स: विवेक:” अत्र विशेष्यपदं किमस्ति ?

**वाक्पटु धैर्य वान्मन्त्री सभायामप्यकातरः।**
**स केनापि प्रकारेण परैर्न परिभूयते।।6।।**

**I एकपदेन उतरत-**

(i) श्लोके मंत्रिण: प्रथम: गुण: क: ?

(ii) कीदृश: मंत्रीपरै: नपरिभूयते ?

(iii)धैर्यवान् मंत्रीकै: नपरिभूयते ?

(iv) वाक्पटु धैर्य वान्मन्त्री कुत्र अकातर: भवेत् ?

**II पूर्णवाक्येन उतरत-**

(i) श्रेष्ठ: मंत्री कीदृश: न भवति ?

(ii) मंत्री सभायां कीदृशो भवेत् ?

(iii)सभायामप्य कातरः मन्त्री कै: न परिभूयते ?

(iv) क: परै: न परिभूयते ?

**III निर्देशानुसारं उतरत-**

(i) “परिभूयते” इति कर्तृपदस्य क्रियापदं किम् ?

(ii)”अकातर:” विशेषणस्य क: विशेष्य: श्लोके आगत:?

(iii) “अकुशल:” इत्यस्य पदस्य क: विपर्यय श्लोके लिखित:?

(iv) “कातर:” इति पदस्य क: विलोमपदं श्लोके आगत:?

(v) “धैर्यवान्मन्त्री” अत्र विशेषण पदं किम् ?

**य इच्छत्यात्मनः श्रेयः प्रभूतानि सुखानि च।**

**न कुर्यादहितंकर्म स परेभ्यः कदापि च।।7।।**

**I एकपदेन उतरत-**

(i) मनुष्य: प्रभूतानि कानि इच्छति ?

(ii) मनुष्य: आत्मन: किम् इच्छति ?

(iii) केभ्य: कदापि अहितं न कुर्यात् ?

(iv) किं न कुर्यात् ?

**II पूर्णवाक्येन उतरत-**

(i) य: आत्मन: श्रेय: इच्छति, स: किं न कुर्यात् ?

(ii) क: स्वजीवने सुखानि इच्छति ?

(iii) य: आत्मन: प्रभूतानि सुखानि इच्छति, स: किं न कुर्यात् ?

(iv) कस्य श्रेय: इच्छति ?

**III निर्देशानुसारं उतरत-**

(i) “सुखानि’ पदस्य विशेषणपदं किम्?

(ii) “दु:खानि” इत्यस्य पदस्य क: विपर्यय श्लोके लिखित:?

(iii) ”य:” इति कर्तृपदस्य क्रियापदं किम् ?

(iv) “अहितंकर्म” अत्र विशेष्यपदं किमस्ति ?

(v) “अन्येभ्य:” इति अर्थे श्लोके किं पदं प्रयुक्तम् ?

**आचारः प्रथमोधर्मः इत्येत द्विदुषांवचः।**

**तस्माद्रक्षेत्सदाचारं प्राणेभ्योऽपि विशेषतः।।8।।**

**I एकपदेन उतरत-**

(i) अस्माकं प्रथम: धर्मः क:?

(ii) “आचारःप्रथमोधर्मः” इति केषां वचः।

(iii)प्राणेभ्योऽपि विशेषतः क:?

(iv) कं रक्षेत् ?

**II पूर्णवाक्येन उतरत-**

(i) विदुषां वचः किम् ?

(ii) प्रत्येकं जन: जीवने कं रक्षेत् ?

(iii) कं प्राणेभ्योऽपि विशेषतः रक्षेत् ?

(iv) “अस्माकं व्यवहार: सम्यक् भवेत्” इति केषां वचनम् अस्ति ?

**III निर्देशानुसारं उतरत-**

(i) "दुराचारम्" इत्यस्य विपर्यय पदं किम् ?

(ii) "प्रथम:धर्म:" अनयो::पदयो: विशेष्यपदं किम्?

(iii) "तस्माद् रक्षेत्सदाचारम्" अत्र क्रियापदं किम् ?

(iv) "अस्य" इति सर्वनामपदं श्लोके कस्मै प्रयुक्तम् ?

(v) "धर्म:" इति पदस्य विशेषणपदं किम् ?

## तिरुक्कुरल्-सूक्ति-सौरभम्

## उत्तर-कुंचिका

**(श्लोक -१)**

**I एकपदेन उतरत-**

(i) विद्याधनम् (ii) पुत्राय (iii) पिता (iv) विद्याधनम्

**II पूर्णवाक्येन उतरत-**

(i) पिता पुत्रस्य विद्यादाने किं तप: तेपे इति उक्ति एव तस्य कृतज्ञता भवति |

(ii) पिता बाल्ये विद्या धनं यच्छति |

(iii) बाल्ये पिता पुत्राय विद्याधनं यच्छति |

**(iv)** विद्याधनं महत् अस्ति |

**III निर्देशानुसारं उतरत-**

**(i)** पिता (ii) महत् (iii) कृतज्ञता (iv) पुत्राय

(v) विद्याधनम्

**(श्लोक -२)**

**I एकपदेन उतरत-**

(i) अवक्रता (ii) वाचि (iii) महात्मन: (iv) अवक्रता

**II पूर्णवाक्येन उतरत-**

(i) चित्ते वाचि च अवक्रता महात्माभि: समत्वं कथ्यते |

(ii) जनानां वाचि अवक्रता भवेत् |

(iii) जनानां वाचि अवक्रता भवेत् |

(iv) चित्ते वाचि च अवक्रता भवेत् |

**III निर्देशानुसारं उतरत-**

(i) अवक्रता (ii) अवक्रता (iii) चित्ते (iv) महात्मान: (v) वाचि

**(श्लोक -३ )**

**I एकपदेन उतरत-**

(i) परुषाम् (ii) पक्वम् (iii) विमूढ़धी: (iv) विमूढ़धी:

**II पूर्णवाक्येन उतरत-**

(i) य: धर्मप्रदाम् वाचं त्यक्त्वा परुषां वदेत् स: विमूढ़धी: भवति |

(ii) विमूढ़धी: धर्मप्रदां वाचं त्यजति |

(iii) विमूढ़धी: परुषां वाचं अभ्युदीरयेत् |

(iv) विमूढ़धी: अपक्वम् फलं भुंङ्क्ते |

**III निर्देशानुसारं उतरत-**

(i) अपक्वम् (ii) अभ्युदीरयेत् (iii)पक्वम् (iv) विमूढ़धी: (v)वाचम्

**(श्लोक -४)**

**I एकपदेन उतरत-**

(i) विद्वांस: (ii) चक्षु: (iii) अन्येषां (iv) चक्षुष्मन्तः

**II पूर्णवाक्येन उतरत-**

(i) अस्मिन् लोके विद्वांस: चक्षुष्मन्त: स्मृता:|

(ii) अन्येषां वदने स्थाने चक्षुनामनी मते |

(iii) विद्वांस: अस्मिन् लोके चक्षुष्मन्त: स्मृता: |

(iv) अस्मिन् लोके विद्वांस: चक्षुष्मन्तः प्रकीर्तिताः|

**III निर्देशानुसारं उतरत-**

(i) लोके (ii)विद्वांस: (iii) प्रकीर्तिता: (iv) वदने

(v)चक्षुष्मन्त:

**(श्लोक -५)**

**I एकपदेन उतरत-**

(i) तत्त्वार्थनिर्णय: (ii) विवेकेन (iii) जन: (iv) विवेक:

**II पूर्णवाक्येन उतरत-**

(i) येन जन: तत्त्वार्थनिर्णय: कर्तुं शक्यते स: विवेक: भवति |

(ii) जन: तत्वार्थनिर्णय: कर्तुं शक्नोति |

(iii)यत्प्रोक्तंयेनकेनापितस्यतत्त्वार्थनिर्णयःयेन कर्तुं शक्यो भवेत् स: विवेक: ईरित: |

(iv) येन केनापि यत्प्रोक्तम् तस्य तत्वार्थनिर्णय: विवेकेन कर्तुं शक्यो भवेत् |

**III निर्देशानुसारं उतरत-**

(i) येन-केन (ii) प्रोक्तम् (iii) ईरित: (iv) प्रोक्तम् (v) विवेक:

**(श्लोक -६)**

**I एकपदेन उतरत-**

(i) वाक्पटु: (ii) धैर्यवान् (iii) परै: (iv) सभायाम्

**II पूर्णवाक्येन उतरत-**

(i) श्रेष्ठ: मंत्री केनापि प्रकारेण परै: न परिभूयते |

(ii) मंत्री सभायां अकातर: भवेत् |

(iii) सभायाम् अपि कातरः मन्त्री केनापि प्रकारेण परै: न परिभूयते |

(iv) मंत्री परै: न परिभूयते|

**III निर्देशानुसारं उतरत-**

(i)परै: (ii) मंत्री (iii) पटु: (iv) अकातर: (v) धैर्यवान्

**(श्लोक -७)**

**I एकपदेन उतरत-**

(i)सुखानि (ii) श्रेय: (iii) परेभ्य: (iv) अहितम्

**II पूर्णवाक्येन उतरत-**

(i) य: आत्मन: श्रेय: इच्छति, स: परेभ्य: अहितं कर्म न कुर्यात् |

(ii) मनुष्य: स्वजीवने सुखानि इच्छति |

(iii) य: आत्मन: प्रभूतानि सुखानि इच्छति,स: कदापि परेभ्य: अहितं न कुर्यात् |

(iv) आत्मन: श्रेय: इच्छति |

**III निर्देशानुसारं उतरत-**

(i) प्रभूतानि (ii) सुखानि (iii) इच्छति (iv) कर्म (v)परेभ्य:

**(श्लोक -८)**

**I एकपदेन उतरत-**

(i) आचार: (ii) विदुषाम् (iii) सदाचार: (iv) सदाचारम्

**II पूर्णवाक्येन उतरत-**

(i) "आचार: प्रथमो धर्म:" इति विदुषां वच: अस्ति |

(ii) सदाचारं जीवने रक्षेत् |

(iii) सदाचारं प्राणेभ्योऽपि विशेषत: रक्षेत् |

(iv) "अस्माकं व्यवहार: सम्यक् भवेत्" इति विदुषां वचनम् अस्ति |

**III निर्देशानुसारं उतरत-**

(i) सदाचारम् (ii) धर्म: (iii) रक्षेत् (iv) पुत्राय (v) प्रथम:

## <u>नवमः पाठः</u>

## <u>सुस्वागतं भो! अरुणाचलेऽस्मिन्</u>

1. अधोलिखित संवादान् पठित्वा एतदाधारितानां प्रश्नानाम् उत्तराणि प्रदत्त स्थानेषु लिखत-

(क) पर्यटनाधिकारी - (ध्वनिविस्तारक यन्त्रस्य समीपम् आगत्य ) प्रिय च्छात्राः। अभिनन्दनं भवताम् अस्मिन् प्रदेशे। प्रसीदामियत् भवन्तः अस्य रम्यस्य प्रदेशस्य विषये ज्ञातुम् अति उत्सुकाः। एतदर्थं स्थलानां दर्शनाय प्रबन्धः अपि वर्तते परन्तु सम्प्रति प्रश्नोत्तर माध्यमेन भवतां जिज्ञासां शमयितुम् इच्छामि। प्रथमं तु अहम् एव एकं प्रश्नं पृच्छामि। अस्य प्रदेशस्य नाम' अरुणाचल:' कथं जातम्? अनुमीयताम्।

हिमांशुः - अहं चिन्तयामि यत्' अरुणः' तु सूर्यस्य पर्यायः। अस्य प्रकाशः सर्वप्रथमम् इमं प्रदेशं स्पृशति। अतः अरुणस्य प्रदेश: अरुणाचलः।

पर्यटनाधिकारी - शोभनम्। उचितम् उक्तम्। हिमाद्रि तुङ्ग शृङ्गैः सुशोभिता सूर्योदय भूमिः इयम् । अतः अरुणाचलः। अस्मिन् प्रदेशे पञ्चाशदधिकाः नद्यः प्रवहन्ति। विपुला च अत्र वन सम्पदा। वनौषधीनां तु अयंस्रोतः एव। पुष्पाणां समृद्धिः सुगन्धिः च मनोहरः।सर्वत्र हरीतिमा।

प्रश्ना:-

**1. एकपदेनउत्तरत-**

(i) पर्यटनाधिकारी किं शमयितुम् इच्छति?

(ii) अरुणस्य प्रकाश: सर्वप्रथमं कं प्रदेशं स्पृशति?

(iii) केषां समृद्धिः सुगन्धिः च मनोहरा?

**2. पूर्णवाक्येनउत्तरत-**

(i) अयम्अरुणाचलःकथम्?

(ii) अरुणाचलप्रदेशे कति नद्यः प्रवहन्ति ?

(iii) इयं सूर्योदय भूमि: कैःसुशोभिता?

**3. निर्देशानुसारम् उत्तरत-**

(i) अस्य प्रकाश: सर्वप्रथमम् इमं प्रदेशं 'स्पृशति।' अत्र' स्पृशति' इति क्रिया पदस्य कर्तृ पदं किम्?

(ii) 'सम्प्रति' इति पदस्य अर्थः कः?

(iii) 'भवतां जिज्ञासाम्' अत्र' भवताम्' इति सर्वनामपदं कस्मै प्रयुक्तम्?

(ख) पर्यटनाधिकारी - अत्र अनेके प्रमुखोत्सवाः। 'वाङ्चो' जनजातीनां प्रमुखं पर्व 'ओरिया' इति अस्ति।एतत् तु फरवरी इति मासे मान्यते। अस्मिन् अवसरे कृषि भूमिपूजनं सेतु निर्माणं च सामाजिकं कार्यं क्रियते। 'मोपीन' इति अपि कृषिपर्व अस्ति।देवानामपि देवः 'मोपीन' इति कथ्यते।
हिमांशुः - अस्माभिः 'मिथुन' इति विषये अपि किञ्चित् श्रुतम्। किं तत्?
पर्यटनाधिकारी - 'मिथुनः' गोमहिषसदृशः एकः विशिष्टः राजपशुः अस्ति।
शोभा - वयम् अत्रत्यानाम् ऐतिहासिकस्थलानां विषये ज्ञातुम् इच्छामः।
पर्यटनाधिकारी - मया पूर्वम् एव उक्तं यत् अस्य प्रदेशस्य दर्शनीयस्थलानां दर्शनाय विशेषः प्रबन्धः अपि अस्ति।अधुना तु वयम् अनेन प्रक्षेपक यन्त्रेण केषाञ्चित् स्थलानां परिचयं प्राप्स्यामः।

**प्रश्ना:-**

**1. एकपदेन उत्तरत-**

(i) देवानां देव: कः अस्ति?

(ii) फरवरी मासे किं पर्व सम्पद्यते?

(iii) 'मोपीन' इति कीदृशं पर्व अस्ति?

**2. पूर्णवाक्येन उत्तरत-**

(i) मिथुनः कीदृशः राजपशुः अस्ति?

(ii) 'ओरिया' इति केषां प्रमुखं पर्व अस्ति?

(iii) विशेष: प्रबन्धःकिमर्थम् अस्ति?

**3. निर्देशानुसारम् उत्तरत-**

(i) 'इच्छाम:' इति क्रियापदस्य कर्तृपदं किम् ?

(ii) 'मया तु पूर्वम् एवम् उक्तं' अत्र मया कस्य कृते प्रयुक्तम्?

(iii) 'प्रबन्ध:' इति पदस्य विशेषण पदं किम् ?

**(ग)**पर्यटनाधिकारी - 'मिथुन' गोमहिषसदृशः एकः विशिष्टः राजपशुः अस्ति।

शोभा - वयम् अत्रत्यानाम् ऐतिहासिक स्थलानां विषये ज्ञातुम् इच्छामः।

पर्यटनाधिकारी - मया पूर्वम् एव उक्तं यत् अस्य प्रदेशस्य दर्शनीय स्थलानां दर्शनाय विशेषः प्रबन्धः अपि अस्ति। अधुना तु वयम् अनेन प्रक्षेपक यन्त्रेण केषाञ्चित्स्थलानां परिचयं प्राप्स्यामः। पश्यत एतत् चित्रम्।

राजीव: - किम् एतत् कस्य चित् दुर्गस्य चित्रम्?

पर्यटनाधिकारी - आम्! एतत् दिवांग-उपत्यका-मण्डलेस्थितं भीष्मक नगर दुर्गम्! अस्य अवशेषाः तु आर्यकला-संस्कृतिसम्पदः परिचायकाः।अधुना इदं चित्रं पश्यत।

## प्रश्ना:-

1. एकपदेन उत्तरत-

(i) केषां दर्शनाय प्रबन्धः कृतः?

(ii) विशिष्टः राजपशुः कः?

(iii) ऐतिहासिकस्थलानां विषये ज्ञातुम् उत्सुकाः के सन्ति?

2. पूर्णवाक्येन उत्तरत-

(i) भीष्मकनगरदुर्गस्य अवशेषाः कीदृशाः सन्ति।

(ii) भीष्मकनगरदुर्गं कुत्र अस्ति?

(i) पर्यटनाधिकारी स्थलानां परिचयं केन करिष्यति?

3. निर्देशानुसारम् उत्तरत-

(i) 'इच्छामः' इति क्रियापदस्य कर्तृपदं किम्?

(ii) 'विशेष:' इति पदस्य विशेष्यपदं किम्?

(iii) 'मया पूर्वम् एव उक्तम्' अत्र 'मया' इति सर्वनामपदं कस्मै प्रयुक्तम्?

**(घ)**पर्यटनाधिकारी - आम्! एतत् दिवांग-उपत्यका-मण्डले स्थितं भीष्मकनगर दुर्गम्! अस्य अवशेषाः तु आर्यकला-संस्कृति-सम्पदः परिचायकाः। अधुना इदं चित्रं पश्यत।

शैलेश: - अहं जानामि इदं स्थानम्! इदं तु' तवाङ्ग गोम्पा' इति प्रसिद्धः बौद्धमठः।

पर्यटनाधिकारी - सम्यक्अभिज्ञातम्! मनोहरेसुरम्ये'तवाङ्ग' इति स्थले राजते अयं बौद्ध मठः।पञ्च शतानां बौद्धभिक्षूणां निवास योग्या स्थली इयम्। लोहित जनपदे अपि अनेक बौद्ध विहाराः सन्ति।

नीलिमा - मान्यवर! मया अस्य प्रदेशस्य 'परशुरामकुण्डम्' इति दर्शनीयस्थलविषये अपि पठितम्!

प्रश्नाः-

**1. एकपदेन उत्तरत-**

(i) 'परशुरामकुण्डम्' इति दर्शनीय स्थल विषये कया पठितम्?

(ii) अनेके बौद्ध विहाराः कुत्र सन्ति?

(iii) प्रसिद्धः बौद्धमठः किम्?

**2. पूर्णवाक्येन उत्तरत-**

(i) भीष्मकनगर दुर्गम् कुत्रस्थितम्?

(ii) 'तवाङ्ग गोम्पा' केषां मठः?

(iii) कस्य अवशेषाः आर्यकला-संस्कृति-सम्पदः परिचायकाः?

**3. निर्देशानुसारम् उत्तरत-**

(i) "मया अस्य प्रदेशस्य।" इति वाक्यांशे 'मया' इति सर्वनामपदं कस्याः कृते प्रयुक्तम्?

(ii) 'प्रदेशस्य' इति पदस्य विशेषणपदं किम्?

(iii) 'पठितं' इति क्रियापदस्य कर्तृपदं किम्?

**(ङ)**'परशुरामकुण्डं' तु लोहित नद्याः किञ्चिद्दूरे अस्ति। पूर्वम् इदं ब्रह्मकुण्डम् आसीत्। इदं लोहित नद्याः उद्गमस्थलम् इति मन्यते। अत्र अनेकानि अन्यानि दर्शनीयानि स्थलानि अपि सन्ति। अस्माकं पर्यटनविभागेन प्रकाशितां केषाञ्चित् प्रसिद्धस्थलानां सूचीं पठित्वा ज्ञायताम् इमानि पर्यटनस्थलानि- एतेषां दर्शनाय सम्पूर्णा व्यवस्था वर्तते। कार्यक्रमस्तु सुनिश्चितः।

प्रश्नाः-

1. एकपदेन उत्तरत-

(i) परशुरामकुण्डं कस्याः उद्गमस्थलं मन्यते?
(ii) परशुरामकुण्डं पूर्वं किम् आसीत् ?
(iii) कार्यक्रमः कीदृशः अस्ति ?
2. पूर्णवाक्येन उत्तरत-
(i) केषां दर्शनाय सम्पूर्णा व्यवस्था वर्तते?
(ii) लोहितनद्याः किञ्चित दूरे किम् अस्ति?
(iii) केषाञ्चित प्रसिद्ध-स्थलानां सूची केन प्रकाशिता ?
3. निर्देशानुसारम् उत्तरत-
(i) 'व्यवस्था' इति कर्तृपदस्य किं क्रियापदं गद्यांशे प्रयुक्तम्?
(ii) 'एतेषाम्' इति सर्वनाम पदं केभ्यः प्रयुक्तम्?
(iii) 'दर्शनीयानि' इति पदस्य विशेष्य पदं किम्?

## उत्तराणि-

**(क)** 1. (i) छात्राणां जिज्ञासां (ii) अरुणाचलं (iii) पुष्पाणाम्

2. (i) 'अरुण:' सूर्यस्य पर्याय: ।सूर्यस्य प्रकाश: सर्वप्रथमंइमंप्रदेशंस्पृशति। अतः अरूणस्य प्रदेशः अरुणाचलः।
(ii) अरुणाचलप्रदेशे पञ्चाशदधिकाः नद्यः प्रवहन्ति ।
(iii) इयं सूर्योदयभूमिः हिमाद्रितुङ्गशृङ्गैः सुशोभिता।
3. (i) प्रकाश: (ii) अधुना (iii) छात्रेभ्यः

(ख) 1. (i) मोपीनः (ii) ओरिया (iii) कृषिपर्व

2. (i) मिथुन: गोमहिषसदृशः एकः विशिष्टः राजपशुः अस्ति।

(ii) 'ओरिया' इति वाङ्चोजनजातीनां प्रमुखं पर्व अस्ति।

(iii) अरूणाचलप्रदेशस्य दर्शनीयस्थलानां दर्शनायविशेषः प्रबंधः अस्ति।

3. (i) वयम् (ii) पर्यटनाधिकारिणः (iii) विशेषः।

**(ग)** 1. (i) दर्शनीयस्थलानां (ii) मिथुन: (iii) सर्वेछात्रा:

2. (i) भीष्मकनगर दुर्गस्य अवशेषाः तु आर्यकला-संस्कृति-सम्पदः परिचायकाः सन्ति।
(ii) भीष्मकनगर दुर्गं दिवाङ्ङ्ग- -उपत्यका-मण्डले अस्ति।
(iii) पर्यटनाधिकारीस्थलानां परिचयं प्रक्षेपक यन्त्रेण करिष्यति।

3.(i) वयम्  (ii) प्रबन्धः  (iii) पर्यटनाधिकारिणे

**(घ)** 1. (i) नीलिमया  (ii) लोहितजनपदे  (iii) तवाङ्गगोम्पा

2. (i) भीष्मकनगर दुर्गंदिवांग-उपत्यका-मण्डले स्थितम्।

(ii) 'तवाङ्गगोम्पा' बौद्धानाम्मठः।

(iii) भीष्मकनगर दुर्गस्य अवशेषाः आर्यकला-संस्कृति-सम्पदः परिचायकाः।

3. (i) नीलिमायाः  (ii) अस्य  (iii) मया

**(ङ)** 1. (i) लोहितनद्याः  (ii) ब्रह्मकुण्डम्  (iii) सुनिश्चितः

2. (i) पर्यटनस्थलानां दर्शनाय सम्पूर्णा व्यवस्था वर्तते।

(ii) लोहितनद्याः किञ्चित दूरे परशुरामकुण्डम् अस्ति।

(iii) के वाञ्चितप्रसिद्ध-स्थलानां सूचीपर्यटन विभागेन प्रकाशिता।

3. (i) वर्तते  (ii) पर्यटनस्थलेभ्यः  (iii) स्थलानि

## प्रश्न-निर्माणम्

**प्रश्न निर्माण क्या है ?**

एक सामान्य वाक्य को प्रश्नवाचक वाक्य बनाना ही प्रश्न निर्माण कहलाता है । संस्कृत में प्रश्न निर्माण के लिए इन विषयों का ज्ञान अत्यन्त आवश्यक है-

1. 'किम्' शब्दरूप तीनों लिंगों में
2 . प्रश्नवाचक अव्यय (सप्त ककाराः)

**प्रश्न निर्माण कैसे करें ?**

प्रश्न निर्माण बनाने के लिए निम्न बातों का ध्यान रखना आवश्यक है-

1. वाक्य में जिस शब्द से प्रश्न बनाना हो उसका लिंग, विभक्ति, वचन पहचानिए ।
2. लिंग, विभक्ति और वचन आपने पहचाना हो वही लिंग, विभक्ति और वचन का किम् शब्दरूप चुनिए, प्रश्न बन जाएगा ।
3. जिस वाक्य को प्रश्नवाचक वाक्य बनाना है उसके साथ प्रश्नवाचक (?) चिह्न का प्रयोग अवश्य करें ।

**किम् शब्दरूप से प्रश्न निर्माण-**

किम् शब्द का अर्थ होता है **कौन** । किम् शब्द के रूप तीनों लिंगों के लिए अलग-अलग चलते हैं । अतः किम् शब्दरूप से तीनों लिंगों में प्रश्न निर्माण होते हैं

| | **किम् शब्दः- पुल्लिंग** | | | **किम् शब्दः- स्त्रीलिंग** | | | **किम् शब्दः- नपुंसकलिंग** | | |
|---|---|---|---|---|---|---|---|---|---|
| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
| प्रथमा | कः | कौ | के | का | के | काः | किम् | के | कानि |
| द्वितीया | कम् | कौ | कान् | काम् | के | काः | किम् | के | कानि |
| तृतीया | केन | काभ्याम् | कैः | कया | काभ्याम् | काभिः | केन | काभ्याम् | कैः |
| चतुर्थी | कस्मै | काभ्याम् | केभ्यः | कस्यै | काभ्याम् | काभ्यः | कस्मै | काभ्याम् | केभ्यः |
| पञ्चमी | कस्मात् | काभ्याम् | केभ्यः | कस्याः | काभ्याम् | काभ्यः | कस्मात् | काभ्याम् | केभ्यः |
| षष्ठी | कस्य | कयोः | केषाम् | कस्याः | कयोः | कासाम् | कस्य | कयोः | केषाम् |
| सप्तमी | कस्मिन् | कयोः | केषु | कस्याम् | कयोः | कासु | कस्मिन् | कयोः | केषु |

**विशेष-** नपुंसकलिंग के तृतीया विभक्ति से प्रश्न निर्माण पुल्लिंग कि तरह ही चलेंगे ।

**किम् शब्दपुल्लिंग में प्रश्ननिर्माण-**

| | |
|---|---|
| 1. देवः ग्रामं गच्छति । | कः ग्रामं गच्छति ? |
| 2.बालकौ पत्रं लिखतः । | कौ पत्रं लिखतः ? |
| 3. बालकाः खेलं खेलन्ति । | के खेलं खेलन्ति ? |
| 4. दीपकः मोहनं पश्यति । | दीपकः कं पश्यति ? |
| 5. शिक्षकः छात्रौ पाठयति । | शिक्षकः कौ पाठयति |
| 6.बालकः वृक्षान् गणयति । | बालकः कान् गणयति ? |
| 7. रामः देवेन सह गच्छति । | रामः केन सह गच्छति ? |
| 8. रमेशः कर्णाभ्यां शृणोति । | रमेशः काभ्यां शृणोति ? |
| 9. गजः चरणैः चलति । | गजः कैः चलति ? |
| 10. पिता पुत्राय फलं ददाति । | पिता कस्मै फलं ददाति ? |
| 11. धनिकः निर्धनाभ्यां धनं यच्छति । | धनिकः काभ्यां धनं यच्छति ? |
| 12. शिक्षकः छात्रेभ्यः फलानि आनयति । | शिक्षकः केभ्यः फलानि आनयति ? |
| 13. उमेशः ग्रामात् नगरं गच्छति । | उमेशः कस्मात् नगरं गच्छति ? |
| 14. हस्ताभ्यां पुस्तकं पतति । | काभ्यां पुस्तकं पतति ? |
| 15. वृक्षेभ्यः पत्राणि पतन्ति । | केभ्यः पत्राणि पतन्ति ? |

16. रामस्य मित्रं श्यामः अस्ति । कस्य मित्रं श्यामः अस्ति ?

17. रामलक्ष्मणयोः पिता दशरथः अस्ति । कयोः पिता दशरथः अस्ति ?

18. छात्राणां विद्यालयः नगरे अस्ति । केषां विद्यालयः नगरे अस्ति ?

**किम् शब्दरूप स्त्रीलिंग में प्रश्ननिर्माण-**

1. रमा नगरं गच्छति । का नगरं गच्छति ?
2. लते पुस्तकं पठतः । के पुस्तकं पठतः ?
3. बालिकाः भोजनं पचन्ति । काः भोजनं पचन्ति ?
4. उमा बालिकाम् पश्यति । उमा कां पश्यति ?
5. सीता रोटिकाः खादति । सीता काः खादति ?
6. सीता द्विचक्रिकया गच्छति । सीता कया गच्छति ?
7. शिक्षिका लतायै फलं ददाति । शिक्षिका कस्यै फलं ददाति ?
8. छात्राः कक्षायाः बहिः गच्छन्ति । छात्राः कस्याः बहिः गच्छन्ति ?
9. सीतायाः पिता जनकः अस्ति । कस्याः पिता जनकः अस्ति ?
10. अयं बालिकानां विद्यालयः अस्ति । अयं कासां विद्यालयः अस्ति ?

**किम्शब्द रूप नपुंसकलिंग में प्रश्न निर्माण-**

1. एतत् **फलम्** अस्ति । एतत् किम् अस्ति
2. वृक्षे **फलानि** सन्ति । वृक्षे कानि सन्ति ?
3. महेशः फ**लानि** खादति । महेशः कानि खादति ?
4. देवः **पत्रं** लिखति । देवः किं लिखति ?

**प्रश्नवाचक अव्यय- सप्त ककाराः**

अव्यय उन शब्दों को कहा जाता है जिनके रूप बदलते नहीं हैं। अव्ययों में कुछ अव्यय ऐसे हैं जिनसे सामान्य वाक्य को प्रश्नवाचक में बदला जाता है । प्रश्नवाचक अव्ययों का प्रयोग एक निश्चित स्थान पर किया जाता है ।प्रश्नवाचक अव्यय निम्न हैं-

1. किम् - क्या    2. कुत्र - कहाँ    3. कदा - कब    4. किमर्थम् - क्यों

5. कथम् - कैसे    6. कुतः - कहाँ से    7. कति

**1. किम्- क्या**

किम् का प्रयोग उन शब्दों के साथ किया जाता है जिनका उपयोग खाने-पीने, पहनने किया जाता है और किसी काम को करने के लिए भी किम् अव्यय का प्रयोग करते हैं ।

जैसे- (क) मोहनः फलं खादति । मोहनः किं खादति ?

(ख) लता पत्रं लिखति । लता किं लिखति ?

(ग) उमा जलं पिबति ।　　　　उमा किं पिबति ?

**2. कुत्र- कहाँ**

जहाँ पर कोई व्यक्ति या वस्तु हो और जहाँ कोई जा रहा हो वहाँ पर कुत्र अव्यय का प्रयोग होता है ।

| जैसे- | (क) महेशः विद्यालयं गच्छति । | महेशः कुत्र गच्छति ? |
|---|---|---|
| | (ख) रमा गृहे अस्ति । | रमा कुत्र अस्ति ? |
| | (ग) फलानि वृक्षे सन्ति । | फलानि कुत्र सन्ति ? |

**3. कदा- कब**

कदा अव्यय का प्रयोग समय से सम्बन्धित शब्दों के साथ होता है ।

| जैसे- | (क) उमेशः प्रातःकाले भ्रमति । | उमेशः कदा भ्रमति ? |
|---|---|---|
| | (ख) गीता अष्टवादने विद्यालयं गच्छति । | गीता कदा विद्यालयं गच्छति ? |
| | (ग) गौरव रात्रौ भोजनं खादति । | गौरवः कदा भोजनं खादति ? |

**4. किमर्थम्- क्यों, किसलिए**

जिस शब्द के साथ 'के लिए' का प्रयोग हुआ हो वहाँ पर किमर्थम् अव्यय का प्रयोग होता है ।

| जैसे- | (क) मोहनः पठनाय विद्यालयं गच्छति । | मोहनः किमर्थं विद्यालयं गच्छति ? |
|---|---|---|
| | (ख) लता भ्रमणाय उद्यानं गच्छति । | लता किमर्थं उद्यानं गच्छति ? |

**5. कथम्- कैसे-**

कथम् अव्यय का प्रयोग किसी के स्वास्थ्य के बारे में जानकारी के लिए और जिस वस्तु की मदद से कोई काम किया जाए वहाँ पर होता है ।

| जैसे- | (क) उमा नगरं बसयानेन गच्छति । | उमा नगरं कथं गच्छति ? |
|---|---|---|
| | (ख) मृगः तीव्रं धावति । | मृगः कथं धावति ? |
| | (ग) महिला द्विचक्रिकया नगरं गच्छति । | महिला कथं नगरं गच्छति |

**6. कुतः- कहाँ से**

जिस जगह से कोई व्यक्ति या वस्तु आ रही हो वहाँ पर कुतः अव्यय का प्रयोग होता है ।

| जैसे- | (क) अजयः ग्रामात् आगच्छति । | अजयः कुतः आगच्छति ? |
|---|---|---|
| | (ख) गंगा हिमालयात् निस्सरति । | गंगा कुतः निस्सरति ? |
| | (ग) फलं वृक्षात् पतति। | फलं कुतः पतति ? |

**7. कति- कितने**

कति शब्द का अर्थ होता है कितने । कति शब्दरूप का प्रयोग संख्यावाचक शब्दों के साथ होता है ।

जैसे- (क) कक्षायां त्रिंशत् छात्रा सन्ति । — कक्षायां कति छात्रा सन्ति ?

(ख) गृहे पंच जनाः सन्ति । — गृहे कति जनाः सन्ति ?

(ग) वने दश वृक्षाः सन्ति । — वने कति वृक्षा सन्ति ?

## मणिका पुस्तक के सभी प्रश्न निर्माण

**1. स्थूलपदानि आधृत्य प्रश्ननिर्माणं कुरुत-**

| | |
|---|---|
| (क) **शारदा** सर्वदा अस्माकं समीपे वसेत्। | (क) का सर्वदा अस्माकं समीपे वसेत्? |
| (ख) **भारत्याः** कोशः अपूर्वः। | (ख) कस्याः कोशः अपूर्वः? |
| (ग) मधुरभाषिणी वाणी **पुरुषं** प्रह्लादयति। | (ग) मधुरभाषिणी वाणी कम् प्रह्लादयति ? |
| (घ) पाठकस्य **षट्** गुणाः सन्ति। | (घ) पाठकस्य कति गुणाः सन्ति ? |
| (ङ)**सत्येन** समं सुखं नास्ति । | (ङ) केन समं सुखं नास्ति। |
| (च)**अनुद्वेगकरं** वाक्यं वाङ्मयं तपः उच्यते। | (च) कीदृशं वाक्यं वाङ्मयं तपः उच्यते? |
| (छ)**रागस्य** विलोमः त्यागः। | (छ) कस्य विलोमः त्यागः? |

**2. अधोलिखित-कथनेषु स्थूलपदानि आधृत्य उदाहरणानुसारं प्रश्ननिर्माणं क्रियताम् -**

| | |
|---|---|
| यथा - राजा **नगरस्य** समन्ततः दानशालाः अकारयत् । | राजा कस्य समन्ततः दानशालाःअकारयत्? |
| (क) अभीष्टवस्तूनि प्राप्य **याचकाः** सन्तुष्टाः आसन् । | (क) अभीष्टवस्तूनि प्राप्य के सन्तुष्टा आसन् ? |
| (ख) **दानशालासु** विचरन् राजा अचिन्तयत् । | (ख) कुत्र विचरन् राजा अचिन्तयत्? |
| (ग) राजा पुत्रवत् **प्रजाः** पालयति स्म। | (ग) राजा पुत्रवत् काः प्रजाः पालयति स्म ? |
| (घ) स राजा **तान्** अकथयत् । | (घ) स राजा कान् अकथयत्? |
| (ङ) राजा **याचकेभ्यः** दानं ददाति स्म। | (ङ) राजा केभ्यः दानम् ददाति स्म ? |

**3. अधोलिखितवाक्येषु स्थूलपदम् आधृत्य प्रश्ननिर्माणं कुरुत-**

| | |
|---|---|
| (क) **नेपथ्ये** काकध्वनिः श्रूयते । | (क) कुत्र काकध्वनिः श्रूयते ? |
| (ख) काकः प्रभाते 'का का' ध्वनिना **सुप्तान्** प्रबोधयति । | (ख) काकः प्रभाते 'का-का' ध्वनिना कान् प्रबोधयति ? |
| (ग) मयूरस्य **पिच्छानां** सौन्दर्यम् अद्भुतम् अस्ति। | (ग) मयूरस्य केषाम् सौन्दर्यम् अद्भुतम् अस्ति ? |
| (घ) बकः मीनान् छलेन अधिगृह्य **क्रूरतया** भक्षयति | (घ) बकः मीनान् छलेन अधिगृह्य कथं भक्षयति? |

।

(ङ) जगत्पतेः एषा सृष्टिः **रमणीया** अस्ति।

(च) मयूरस्य नृत्यं **प्रकृतेः** आराधना ।

(छ) **आयुषः** एकः अपि क्षणः स्वर्णकोटिकैः न लभ्यते।

(ज) हंसः **वर्षौंतु** मानसं पलायते ।

(ङ) जगत्पतेः एषा सृष्टिः कीदृशी अस्ति?

(च) मयूरस्य नृत्यं कस्याः आराधना?

(छ) कस्य एकः अपि क्षणः स्वर्णकोटिकैः न लभ्यते?

(ज) हंसः कदा तु मानसं पलायते ?

### पाठ 4. अधोलिखितवाक्येषु स्थूलपदानि आधृत्य प्रश्ननिर्माणं कुरुत-

यथा- राजपुत्राः वानरयूथं **भोज्यपदार्थैः** पुष्टिं नयन्ति स्म।

(क) अश्वाः **प्राणत्राणाय** इतस्ततः अधावन् ।

(ख) राजा **वैद्यान्** आहूय अश्वरक्षार्थम् अपृच्छत् ।

(ग) सूपकारेण मेषः **अर्धज्वलितकाष्ठेन** ताडितः।

(घ) **प्राज्ञः** कलहयुक्तम् गृहं दूरतः परिवर्जयेत् ।

(ङ) सूर्योदये **तमः** नश्यति ।

(च) ज्वलन् मेषः **अश्वशालां** प्रविशति ।

राजपुत्राः वानरयूथं कैः पुष्टिं नयन्ति स्म?

(क) अश्वाः किमर्थं इतस्ततः अधावन् ?

(ख) राजा कान् आहूय अश्वरक्षार्थम् अपृच्छत्?

(ग) सूपकारेण मेषः केन ताडितः?

(घ) कः कलहयुक्तम् गृहं दूरतः परिवर्जयेत् ?

(ङ) सूर्योदय किं नश्यति ?

(च) ज्वलन् मेषः कुत्र प्रविशति?

### पाठ 5. स्थूलपदानि आधृत्य प्रश्ननिर्माणं कुरुत-

(क) मनुष्यः **कामेन** प्रयुक्तः एव पापस्य आचरणं करोति ।

(ख) कामः एव **क्रोधं** जनयति ।

(ग) काम एव **अस्माकं** शत्रुः ।

(घ) यः क्रोधस्य वेगं जीवने सहते स **सुखी** नरः।

(ङ) **विषयाणाम्** उपभोगेन तेषु आसक्तिः जायते ।

(च) **मनसः** निग्रहः वायोः इव कठिनः ।

(छ) **कामः** ज्ञानस्य विज्ञानस्य च नाशं करोति ।

(ज) कामस्य नाशाय **इन्द्रियाणि** वशे करणीयानि ।

(क) मनुष्यः केन प्रयुक्तः एव पापस्य आचरणं करोति ?

(ख) कामः एव कं जनयति ?

(ग) काम एव केषां शत्रुः?

(घ) यः क्रोधस्य वेगं जीवने सहते सः नरः कीदृशः भवति ?

(ङ) केषाम् उपभोगेन तेषु आसक्तिः जायते ?

(च) कस्य निग्रहः वायोः इव कठिनः?

(छ) कः ज्ञानस्य विज्ञानस्य च नाशं करोति?

(ज) कामस्य नाशाय कानि वशे करणीयानि ?

### पाठ 6. रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणं कुरुत-

(क) पापकर्मणा द्रौणिना **मे** पुत्राः हताः।

(ख) **अस्मिन् संसारे**कश्चिदपि त्वया सदृशः नास्ति।

(ग) न जानाति भवान् **द्रौणेः**चपलां प्रकृतिम्।

(घ)**आचार्यः** पुत्रं सावधानम् अकरोत्।

(ङ)**प्रचण्डज्वालः** अग्निः परितः प्रसरति ।

(च) गगनात् सहस्त्रशः **उल्काः** भूमौ पतन्ति ।

(क) पापकर्मणा द्रौणिना कस्याः पुत्राः हताः?

(ख) कुत्र कश्चिदपि त्वया सदृशः नास्ति ?

(ग) ना जानासि भवान् कस्य चपलां प्रकृतिम् ?

(घ) कः पुत्रं सावधानम् अकरोत्?

(ङ) कीदृशः अग्निः परितः प्रसरति?

(च) गगनात् सहस्रशः काः भूमौ पतन्ति?

**पाठ 7. अधोलिखितानि वाक्यानि पठित्वा स्थूलपदम् आश्रित्य प्रश्ननिर्माणं क्रियताम् -**

(क) **विषादं** त्यक्त्वा उद्यमः क्रियताम् ।

(क) कं त्यक्त्वा उद्यमः क्रियताम् ?

(ख) **जलबिन्दुनिपातेन** क्रमशः घटः पूर्यते ।

(ख) केन क्रमशः घटः पूर्यते ?

(ग) कृषकस्य क्षेत्रे **श्रमं** कृत्वा स धनम् अर्जितवान् ।

(ग) कृषकस्य क्षेत्रे कं कृत्वा स धनम् अर्जितवान्?

(घ) धैर्यम् **आपदां** तरणिः।

(घ) धैर्यम् कासां तरणिः?

(ङ) नरः **साधुवृत्तिं** समाचरेत् ।

(ङ) नरः कीदृशीं वृत्तिं समाचरेत्?

(च) प्रच्छन्नभाग्यस्य गृहम् **मणीनाम्** आभया भासमानम् अभवत् ।

(च) प्रच्छन्नभाग्यस्य गृहम् केषाम् आभया अभवत्?

**पाठ 8. स्थूलपदानि आधृत्य प्रश्ननिर्माणं कुरुत-**

यथा- **विमूढधीः** पक्वं फलं परित्यज्य अपक्वं फलं भुङ्क्ते ।

**कः** पक्वं फलं परित्यज्य अपक्वं फलं भुङ्क्ते

(क) संसारे विद्वांसः **ज्ञानचक्षुभिः** नेत्रवन्तः कथ्यन्ते ।

(क) संसारे विद्वांसः कैः नेत्रवन्तः कथ्यन्ते?

(ख) जनकेन सुताय **शैशवे** विद्याधनं दीयते ।

(ख) जनकेन सुताय कदा विद्याधनं दीयते ?

(ग) तत्त्वार्थस्य निर्णयः **विवेकेन** कर्तुं शक्यतेः ।

(ग) तत्त्वार्थस्य निर्णयः केन कर्तुं शक्यः?

(घ) **साधूनां** चित्ते वाचि च सरलता भवति ।

(घ) केषां चित्ते वाचि च सरलता भवति ?

(ङ) **धैर्यवान्** लोके परिभवं न प्राप्नोति ।

(ङ) कः लोके परिभवं न प्राप्नोति ?

(च )**आत्मकल्याणम्** इच्छन् नरः परेषाम् अनिष्टं न कुर्यात् ।

(च) कम् इच्छन् नरः परेषाम् अनिष्टं न कुर्यात् ?

**पाठ9. अधोलिखितवाक्येषु स्थूलपदानि आधृत्य प्रश्ननिर्माणं कुरुत-**

(क) **अरुणाचलप्रदेशे** पञ्चाशदधिकाः नद्यः प्रवहन्ति ।

(ख) **अरुणस्य** प्रदेशः अरुणाचलः।

(ग) अरुणाचले अनेके **उत्सवाः** मान्यन्ते ।

(घ) **वनौषधीनां** तु अयं स्रोतः एव अस्ति।

(ङ) 'ओरिया' इति पर्वणि अरुणाचले **कृषिभूमिपूजनं सामाजिककार्यं**च भवति ।

(च) **भीष्मक-नगर-दुर्गस्य** अवशेषाः आर्य-कला- संस्कृति-सम्पद्-परिचायकाः ।

(छ) परशुराम कुण्डं **लोहितनद्याः** किञ्चिदं दूरम् अस्ति।

**उत्तरम् -**

(क) कुत्र पञ्चाशदधिकाः नद्यः प्रवहन्ति?

(ख) कस्य प्रदेशः अरुणाचलः?

(ग) अरुणाचले अनेके के मान्यते?

(घ) केषाम् तु अयं स्त्रोतः एव अस्ति?

(ङ) 'ओरिया' इति पर्वणि अरुणाचले किम् भवति ?
च) अवशेषाः कस्य आर्य-काल-संस्कृति सम्पद् परिचायकाः?
(छ) परशुराम कुण्डं कस्याः किञ्चिद् दूरम् अस्ति ?

**पाठ10. उदाहरणमनुसृत्य अधोलिखितानां वाक्यानाम् प्रश्ननिर्माणं क्रियताम् -**
उदाहरणम् - कृतयुगं त्रेतायुगं द्वापरयुगं कलियुगञ्चेति **चत्वारि** युगानि ।
प्रश्नः - कृतयुगं त्रेतायुगं द्वापरयुगं कलियुगञ्चेति कति युगानि ?

| | |
|---|---|
| (क) भूतं वर्तमानं भविष्यद् इति त्रयः कालभेदाः। | (क) भूतं वर्तमानं भविष्यद् इति कति कालभेदाः? |
| (ख) चतुर्णां युगानां समूह एव महायुगम् । | (ग) संवत्सरे षड् के भवन्ति? |
| (ग) संवत्सरे षड् ऋतवः भवन्ति । | (ङ) चतुर्दश मन्वन्तराणां कः कल्पः? |
| (घ) संवत्सरे द्वादश मासाः भवन्ति । | (ख) केषाम् समूह एव महायुगम् ? |
| (ङ) चतुर्दश मन्वन्तराणां समूहः कल्पः। | (घ) कस्मिन् द्वादश मासाः भवन्ति? |
| (च) ब्रह्मणः आयुः शतम् वर्षाणि । | (च) कस्य आयुः शतम वर्षाण |

## अन्वय:

## संस्कृत में अन्वय कैसे करें?

संस्कृत भाषा में पदों का वाक्य में स्थान ज़्यादा महत्वपूर्ण नहीं होता है। वे इधर-उधर बिखरे पड़े हो सकते हैं। उन पदों को तर्कदृष्ट्या योग्य क्रम से पुनः लिखने को अन्वय कहते हैं। जिस से संस्कृत श्लोक तथा वाक्यों को समझने में आसानी हो सके। अन्वय क्रम में श्लोक अथवा वाक्य का अर्थ अधिक स्पष्ट होता है। बहुत बार एक ही वाक्य का अलग-अलग तरह से अन्वय करने पर भिन्न-भिन्न अर्थ भी प्राप्त हो सकते हैं। परन्तु संस्कृत वाक्यों का अन्वय करने का लक्ष्य यही रहता है कि संस्कृत श्लोक अथवा वाक्यों का योग्य अर्थ प्राप्त हो सके।
संस्कृत में अन्वय की आवश्यकता
संस्कृत में अन्वय क्यों करते हैं?
अन्वय करने से संस्कृत श्लोक अथवा वाक्यों का अर्थ आसानी से समझता है। नवीन छात्रों को श्लोकों का अध्ययन करने के लिए अन्वय एक बहुत अच्छा साधान है। अन्वय करने से छात्रों की रुचि श्लोकपठन में बढ़ती है।
श्लोक अथवा वाक्य का अर्थ समझने के लिए संस्कृत भाषा में पदों का स्थान महत्वपूर्ण नहीं होता है। अपितु शब्दों को लगा प्रत्यय महत्वपूर्ण होता है। संस्कृत भाषा में पद कहीं पर भी हो सकते हैं। जैसे की अंग्रेजी में पहला स्थान कर्ता (सब्जेक्ट) का होता है। यानी प्रायः अंग्रेजी वाक्य में प्रथम स्थान पर मौजूद पद कर्ता होता है।    जैसे कि -        राम किल्स रावण.

परन्तु संस्कृत में ऐसा नहीं होता है। संस्कृत में जिस शब्द को प्रथमा विभक्ति लगी होता है, वह पद कर्ता होता है। फिर वह कर्ता वाक्य में कहीं पर भी हो सकता है। वाक्य के अन्त में भी। हो सकता है।

जैसे कि -

- रामः रावणं मारयति। राम रावण को मारता है।
- रामः मारयति रावणम्। राम मारता है रावण को।
- रावणं रामः मारयति। रावण को राम मारता है।
- रावणं मारयति रामः। रावण को मारता है राम।
- मारयति रामः रावणम्। मारता है राम रावण को।
- मारयति रावणं रामः। मारता है रावण को राम।

यानी संस्कृत में शब्द इधर-उधर हो सकते हैं। यदि हम इन बिखरे पदों को सही क्रम से पुनः लिखते हैं, तो संस्कृत श्लोक अथवा वाक्यों को समझने में आसानी हो सकती है। जैसे कि इस श्लोकपंक्ति को देखिए -

- न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः।
- नहीं सोए सिंह के प्रवेश करते हैं मुँह में हिरण।

वस्तुतः यह मूल स्वरूप में ऐसा वाक्य है। जिसे समझने के लिए थोडी परेशानी होती है। परन्तु यदि इसका अन्वय किया जाए, (अन्वय करना हम इस लेख में सीखेंगे) तो यही पंक्ति ऐसी होती है। इसका अर्थ समझना बहुत ही आसान होता है -

- मृगाः सुप्तस्य सिंहस्य मुखे न हि प्रविशन्ति।
- हिरण सोये सिंह के मुंह में नहीं प्रवेश करते हैं।

यह वाक्य समझने में आसान होता है। इस प्रक्रिया को ही अन्वय कहते हैं।

यहाँ हम ने श्लोकपंक्ति में ही मौजूद पदों को फिर से अलग क्रम से लिखा। ऐसे लिखने पर श्लोकपंक्ति का अर्थ अधिक अच्छे से समझ जाता है।

अन्वय किस का करते हैं?

संस्कृत में किसी भी श्लोक अथवा गद्य वाक्य का अन्वय कर सकते हैं।

बहुत सारे लोगों की यह भ्रान्ति है कि केवल श्लोकों का ही अन्वय करते हैं। परन्तु यह गलत है। संस्कृत भाषा में गद्य वाक्यों का भी अन्वय करने की आवश्यकता पड़ सकती है। जैसे कि इस वाक्य को पढ़िए -

- न हि जानाम्यस्य नामधेयम्।
- नहीं जानता हूँ इसका नाम।

इस वाक्य का अन्वय करने से अधिक स्पष्टतया अर्थ प्राप्त होता है -

- (अहम्) अस्य नामधेयं न हि जानामि।
- (मैं) इसका नाम नहीं जानता हूँ।

अतः इस बात को समझ लेना चाहिए कि संस्कृत भाषा में केवल श्लोक ही नहीं, अपितु गद्य वाक्यों का भी अन्वय करने की आवश्यकता होने से प्रत्येक का अन्वय कर सकते हैं।

अन्वय से पहले पदविभाग करना चाहिए

संस्कृत भाषा में पद सन्धि से आपस में जुड़े रहते हैं। इसीलिए अन्वय करने से पूर्व उन को सन्धिच्छेद करके अलग-अलग करना आवश्यक होता है। इसीलिए अन्वयक्रम पढ़ने से पूर्व संधिप्रकरण का ज्ञान होना अतीव आवश्यक है।

लंबे-लंबे समास में मौजूद पदों को संयोगचिह्न के द्वारा दिखाना भी फायदेमंद होता है। साथ ही साथ संस्कृत में समास के द्वारा बहुत सारे लंबे-लंबे शब्द बनते हैं, उनका भी ठीक-ठीक अर्थ जानने के लिए उनको संयोगचिह्न के द्वारा विभक्त करके दिखाते हैं। हालांकि ऐसा करना अनिवार्य नहीं है। परन्तु यदि आप अर्थ को स्पष्ट करना चाहते हैं तो कर सकते हैं।

संस्कृत श्लोक का अन्वय कैसे करते हैं?

किसी भी संस्कृत श्लोक अथवा वाक्य का अन्वय करने के लिए इन बिन्दुओं को की मदद से हम अन्वय रचना क्रम का अध्ययन कर रहे हैं।

- क्रियापद का अन्वय स्थान
- पदों का विभक्ति के अनुसार अन्वयक्रम
- षष्ठ्यन्त पद का अन्वय में स्थान
- विशेषण का अन्वय में स्थान
- पदों के सामर्थ्य के अनुसार अन्वयक्रम में स्थान
- दो क्रियापदों वाले वाक्य
- कृदन्त युक्त वाक्य
- अध्याहार

अब इन बिन्दुओं को विस्तार से पढ़ते हैं।

क्रियापद का अन्वय में स्थान

अन्वयक्रम में क्रियापद (व्हर्ब -verb) हमेशा अन्तिम स्थान पर होता है। मूल वाक्य में क्रियापद कहीं भी हो सकता है। प्रथम भी हो सकता है। परन्तु अन्वय क्रम में क्रियापद हमेशा अन्त में होता है।

पदों का विभक्ति के अनुसार अन्वयक्रम

संस्कृत श्लोक का अन्वय करते समय में पदों का क्रम विभक्ति के अनुसार निश्चित करते हैं। क्रमशः प्रथमा, द्वितीया, तृतीया, चतुर्थी, पंचमी और सप्तमी। इस क्रम से पदों का संयोजन होता है। षष्ठी विभक्ति वाले पद का संबंध जिस पद के साथ हो, उस पद के पूर्व में षष्ठ्यन्त पद को रखना चाहिए।

अर्थात् हम विभक्ति के टेबल में जिस क्रम से विभक्तियों को याद करते हैं, उस की क्रम से संस्कृत श्लोक का अन्वय करते समय भी पदों का क्रम होना चाहिए। हालांकि इस प्रकार से ही क्रम रखना अनिवार्य नहीं है। कुछ कुछ संस्कृत श्लोक ऐसे भी हो सकते हैं, जहाँ पहले स्थान

पर तृतीया विभक्ति आए। कभी कभी अन्वय में पहले स्थान पर पंचमी विभक्ति भी आ सकती है। जैसे कि -

**उदाहरण 1**

- गच्छति छात्रः विद्यालयं पठनाय।
- जाता है छात्र विद्यालय पढ़ने के लिए

सर्वप्रथम इस वाक्य में क्रिया और पदों की विभक्तियों को पहचानते हैं।

- गच्छति (क्रि॰) छात्रः (१) विद्यालयं (२) पठनाय (४)।

इस वाक्य में गच्छति क्रिया है। अतः अन्वय में अन्तिम स्थान पर होगा। छात्रः प्रथमा, विद्यालय द्वितीया, तथा पठनाय यह पद चतुर्थी में है। अतः इसका अन्वय इस क्रम से होना चाहिए -

- छात्रः (१) विद्यालयं (२) पठनाय (४) गच्छति (क्रि॰)।
- छात्र विद्यालय पढ़ने के लिए जाता है।

**उदाहरण 2**

- हस्तेन पुस्तके लिखति श्लोकं छात्रः।

अब हम इस पंक्ति का अन्वय करते हैं। सर्वप्रथम यह निश्चित करते हैं कि कौनसा पद किस विभक्ति में है तथा क्रियापद कौन है? विभक्ति के अनुसार पदों को अंक लिखेंगे।

- हस्तेन(३) पुस्तके(७) लिखति(क्रि॰) श्लोकं(२) छात्रः(१) ।

अब हम इन पदों को क्रमशः लिखते हैं। तो हमें अन्वय मिल जाता है।

- छात्रः श्लोकं हस्तेन पुस्तके लिखति।

**उदाहरण 3** जलं गच्छति समुद्रं नदीमार्गेण।

- जलं १ समुद्रं २ गच्छति क्रि॰ नदीमार्गेण ३।
- जलं समुद्रं नदीमार्गेण गच्छति।

**उदाहरण 4** ददाति छात्राय पुस्तकं शिक्षकः।

- ददाति (क्रि॰) छात्राय (४) पुस्तकं (२) शिक्षकः (१)।
- शिक्षकः पुस्तकं छात्राय ददाति।

षष्ठ्यन्त पद का अन्वय में स्थान

षष्ठ्यन्त पद का अर्थ होता है - षष्ठी अन्त में है जिसके वह पद (षष्ठी + अन्त)। अर्थात् षष्ठी विभक्तिवाला पद। ऐसे षष्ठ्यन्त पद का अन्वय वाक्य में मौजूद किसी भी पद के साथ हो सकता है। षष्ठ्यन्त का पद जिस भी पद के साथ हो, उस के पूर्व में षष्ठ्यन्त पद अन्वयक्रम में होना चाहिए। -

**उदाहरण 5**

शब्दः शिक्षकस्य (६) छात्रस्य (६) नाशयति अज्ञानम्।

शब्द शिक्षक का छात्र का नष्ट करता है अज्ञान।

इस उदाहरण में शिक्षकस्य और छात्रस्य ये दोनों षष्ठ्यन्त पद एकसाथ हैं। तथापि शिक्षकस्य का अन्वय शब्द के साथ और छात्रस्य का अन्वय अज्ञान के साथ हो सकता है। इसीलिए हम शिक्षकस्य को शब्द के पूर्व में और छात्रस्य को अज्ञानं के पूर्व में रख सकते हैं।

- शिक्षकस्य शब्दः छात्रस्य अज्ञानम्

शिक्षकस्य शब्दः छात्रस्य अज्ञानं नाशयति

**उदाहरण 6** विशेषण का अन्वय में स्थान

अन्वयक्रम में विशेषणों का स्थान विशेष्य के पूर्व में होता है।

एक और विशेष बात ध्यान में रखनी चाहिए कि विशेषण हमेशा विशेष्य के ही लिंग, वचन तथा विभक्ति में होते हैं। समान रूपों वाले पदों को एकत्र करके उनमें से विशेष्य के पूर्व में सभी विशेषणों को रखना चाहिए

**अन्वयः / भावार्थः**

1. **<u>वाङ्मयं तपः</u>**

(1) शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात् ।।

अन्वयः- शारदा-अम्भोज ( i ) ------------------सर्वदा शारदा (ii)--------------------------वदन-अम्बुजे (iii)-------------------------सन्निधिम् (iv)-----------------------------क्रियात् ।

**मञ्जूषा - सत् निधिम्, वदना, अस्माकम्, सर्वदा**

**उत्तराणि :- (१) वदना (७) अस्माकम् (ii) सर्वदा (iv) सत् निधिम्**

(भावार्थ :- सर्वदात्री, शरदर्तौ <u>कमलम्</u> इव मुखवती <u>सरस्वती</u> अस्माकं **मुखकमले** सदैव श्रेष्ठ कोषस्य रूपे <u>समीपम्</u> निवासम् कुर्यात् ।

(2) अपूर्वः कोठपि कोशोऽयं विद्यते तव भारति ।
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चायात्||2||

**अन्वयः**

(i)....................................तव अयं कोश: कः अपि (ii).....................................विद्यते।
व्ययतः वृद्धिम् (iii).........................सञ्चयात् (iv)..........................आयाति ||2||

**मञ्जूषा:-** आयाति, भारति ! , अपूर्वः, क्षयम्

**उत्तराणिः -** ( i ) भारति ! (ii) अपूर्वः (iii) आयाति (iv) क्षयम्

**भावार्थ:**

हे <u>सरस्वति !</u> भवत्याः अयं ज्ञानकोश: कोऽपि <u>अपूर्व:</u> कोश अस्ति । यः व्यय करणाम् निरन्तरं वर्धते संग्रह करणात् च क्षीणताम् आप्नोति । एतदेव अस्याः <u>कोषस्य</u> विचित्रता वर्तते।

(3) नास्ति विद्यासमं चक्षुः नास्ति सत्यसमं तपः |
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम्॥3॥

अन्वयः-विद्यासमं ( i )..........................न अस्ति (ii)................................तपः न अस्ति।
रागसमम् (iii)...........................न अस्ति, (iv)............................सुखम् न अस्ति ।
**मञ्जुषा -** दुःखम, चक्षु , सत्यसमं, त्यागसमम्
**उत्तराणि:-**( i ) भारति । ( i ) चक्षु (ii) सत्यसमम (ii) दुःखम् (१४) त्यागसमं

**भावार्थ::-**अस्मिन् संसारे <u>विद्ययासमम्</u> किमपिनेत्रम् न वर्तते । सत्येन् समं किमपि तप न अस्ति। रागेण समम् किमपि <u>दुःखं</u> न भवति । एवमेव त्यागेन समम् किमपिसुखम् न अस्ति। अतः अस्माभि सदैव <u>विद्याप्राप्त्यर्थम्</u> सत्य संपादनार्थम् च प्रयत्नः करणीयः । एवमेव राग विमुक्तये त्यागार्थम् च सचेष्टः भवेत्।

(4) न तथा शीतल सलीलं न चन्दन रसो न शीतला छाया।
प्रहलादयति च पुरुषम् , यथा मधुर भाषिणी वाणी ||4||
यथा ( i )............................वाणी पुरुषम् (ii)..........................................तथा शीतल - सलिलम् न, (iii)........................न शीतला (iv)................चन (प्रहलादयति)
**मञ्जूषा-** चन्दरसः, छाया , प्रह्लादयति, मधुरभाषिणी
**उत्तराणि** (i) मधुरभाषिणी (ii) प्रहलादयति (iii) चन्दरसः (iv) छाया

भावार्थ::-न तु शीतलं जलमेव न चन्दनस्य रसः न<u>शीतला</u> छाया च मनुष्यं तथा <u>आनन्दयति</u> यथा मृदुभाषिणी <u>वाणी</u> पुरुषं प्रसन्नम् करोति । अर्थात <u>मधुरभाषिणी</u> वाणीं श्रुत्वा मनुष्यस्य मनः अपूर्वम् शीतलताम् शान्तिम् च अधिगच्छति । अतः सदैव मधुरां वाणीम्एव वदेत ।

(5) शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।
ऊहापोहार्थ विज्ञानं तत्वज्ञानं च धीगुणाः॥5॥
अन्वयःतथा शुश्रूषा,( i )....................................च एव,(ii) ..............................तथाधारणम्, ऊह (iii)........................................अर्थविज्ञानम् तत्वज्ञानम् च (iv) ............................भवन्ति।
**मञ्जूषा**अपोह, धीगुणाः, श्रवणम् , ग्रहणम्
**उत्तराणिः-** (i) श्रवणम् ( ii ) ग्रहणम् (ii) अपोह (1) धीगुणाः

**भावार्थ** अस्मिन् श्लोके उत्तमबुध्दे अष्टगुणाः वर्णिताः सन्ति। यथा- श्रोतुम् इच्छा (शुश्रूषा), श्रवणम्, ग्रहणम् धारणम्, पक्षे तर्कः (ऊहः) विपक्षे तर्कः (अपोहः) <u>अर्थस्य विशुद्धम् ज्ञानम्</u>(अर्थविज्ञानम्) यथार्थज्ञानम् (तत्वज्ञानम्) च। सा बुध्दिः एव <u>उत्कृष्टा</u> भवति यस्ममाम् उपरिलिखिताः <u>गुणा</u>भवति।

(6) माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः।
धैर्यम्लयसमर्थं च - षडेते पाठकागुणाः 11611

अन्वय-माधुर्यम् ( i )..................................पदच्छेदः तु ( ii )
..........................................धैर्यं (iii)..............................................च एते
(iv)............................ पाठकगुणाः (सन्ति)।

**मञ्जूषा** लयसमर्थं, षट् , सुस्वरः , अक्षरव्यक्ति
**उत्तराणि:-** ( i )अक्षरव्यक्ति (ii) सुस्वरः (iii)लयसमर्थं (iv) षट

**भावार्थ:-**अस्मिन श्लोके पाठानां षडगुणाः कथिताः सन्ति । स:एव उत्तमः पाठकः मन्येते यस्मिन एते गुणा: पठनसमयेः सम्मिलिताः सन्ति - माधुर्यम् अर्थात् मधुरता, अक्षरव्यक्तिः अर्थात वर्णानाम् स्पष्टतया उच्चारणम् पदच्छेद:, सुष्ठु स्वरः धैर्यम्, लयसमर्थम् च। अर्थात् पाठका

(7) आचार्यात्पादमादत्ते पादमं शिष्यः स्वमेधया ।
कालेन पादमादत्ते पादं सब्रहमचारिभिः ।
अन्वय-शिष्य : (i).............................. पादमादत्ते
(शिष्यः)( ii )....................................पादम्शिष्यः ( iii )...................................पादम् आदत्ते,
शिष्यः सब्रहमचारिभि:
पादम् (iv)....................................... |

**मञ्जूषा**:- कालेन, आचार्यात, पादम्, आदत्ते
**उत्तराणि -** ( i ) आचार्यात् ( ii ) पादम् (ii) कालेन (१४) आदत्ते।
**भावार्थ:** :शिष्यस्य शिक्षाप्राप्ते: चत्वारि साधनानि सन्ति । सः शिक्षायाः प्रथमं चतुर्थांशम् आचार्यात् प्राप्नोति । द्वितीयं चतुर्थाशम् च स्वमेधया लभते । एवमेव तृतीयं चतुर्थाशं समयक्रमेण प्राप्नोति शेषम् चतुर्थांशं च सब्रहमचारिभिः प्राप्नोति |

(8) अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते।|
अन्वय-यत् वाक्यम् (1)..........................................सत्यम् (ii).............................च (तथा)
स्वाध्याय (iii)..............................च एव (iv)..............................तपः उच्यते ।

**मञ्जूषा**:- वाङ्मयं, अनुद्वेगकरम, अभ्यसनम्, प्रियहितम
**उत्तराणि:-** (i)अनुद्वेगकरम (ii) प्रियहितम् (iii) अभ्यसनम् (iv) वाङ्मयं

**भावार्थः** । यत् वाक्यम् श्रोतृणाम् हृदये उद्वेगं न करोति, सत्ययुक्तमप्रियं हितकारि च भवति, तस्य वाचनम् तथा च स्वाध्यायस्य अभ्यासः एव वाङ्मयं तपः कथ्यते ।

**२. नास्ति त्यागसमम् सुखम्**

(9) दास्यामीति प्रतिज्ञाय योऽन्यथा कुरुते मनः ।
कार्पण्यनिश्चित मतेः कः स्यात् पापतरस्ततः॥
अन्वय-दास्यामि इति (i)........................... यः मनः अन्यथा (ii)............................
कार्पण्य(iii)....................................... ततः (iv)................................कः स्यात् ?

अन्वय - कुरुते, पापतरः, अनिश्चितमतेः, प्रतिज्ञाय
**उत्तराणि**(- ( i ) प्रतिज्ञाय (ii) कुरुते (iii) अनिश्चितमते (iv) पापतरः

भावार्थ: : अस्य भावोऽस्ति यत् य: जन: स्वजीवने ( i )...................प्रतिज्ञां कृत्वा पश्चात
तस्या: (ii).........................तस्मात् कार्पण्य (iii).................... नरात्अधिक: (iv)
................कोऽपि न भवति |
**उत्तराणि :-** (i) दानस्य (ii) पालनम् (ii) अनिश्चितमतेः ७) पापी

(10) शक्रोऽहमस्मि देवेन्द्रस्त्वत् समीपमुपागतः ।
वरं वृणीध्व राजर्षे! यदिच्छसि तदुच्यताम् ॥

अन्वय राजषे! अहं (i).................................. शक्रः त्वत् (ii)................................ उपागत:
अस्मि । वरं (iii)..........................................यत् इच्छसि (iv).....................उच्यताम्

**मञ्जूषा**- तत्, समीपम् , देवेन्द्रः, वृणीष्व
**उत्तराणि:-** (1) देवेन्द्र : (ii) समीपम् (iii) वृणीष्व (iv) तत्

भावार्थ: अस्य भावोडास्त - अस्मिन् श्लोके शक्र :(i).................... कथयति यत्
(ii)......................तव समीपे वरं दातुम् (i ii )..........................अस्मि । अतः हे राजषे !वरं
वृणीष्व, यद्यपि त्वम् इच्छसि तत् (iv).....................कथय ।

**उत्तराणि-** (१) नृपम् (ii) शक्रः (१) उपागत: (१०) माम्

(11) धनस्य नि:सारलघोः स सारो यद् दीयते लोकहितोन्मुखेन |
निधानतां याति हि दीयमानम्, अदीयमानं निधनै कनिष्ठम्॥
**अन्वय -**
निःसारलघोः(i)......................सःसारःयत्(ii).......................उन्मुखेनदीयते(iii).........................
.......... (धनं) निधानतां हि याति। अदीयमानं(धनं) निधन- (iv)................................(भवति)।
**मञ्जूषा**- लोकहित, एकनिष्ठम्, धनस्य, दीयमानं
**उत्तराणि:-** (i) धनस्य (ii) लोकहित (iii) दीयमानं (iv) स्कनिष्ठम्

भावार्थः-  अस्यभावोऽस्तियत्-धनस्य(i)..............................अस्ति। तस्य अयम् एव (ii) ..............................यत् धनम्संसारस्य हिताय दीयते तत्(iii) ...............................सुरक्षितं भवति, यत् धनं न दीयते तस्य तु एकपदे एव (iv) ..................................... सञ्जायते |

उत्तराणि: ( i ) सारहीनम्  (ii) लाभ:  (iii) निधिरूपे  (iv) नाश:

**3. रमणीयाहिसृष्टिःएषा**

(12) काकस्य गात्रं यदि काञ्चनस्य, माणिक्यरत्नं यदि चञ्चुदेशे
एकैकपक्षे ग्रथितं मणीनां ,तथापि काको न तु राजहंस:॥

अन्वय यदि (i) ............................गात्रं काञ्चनस्य, यदि (ii) ....................... माणिक्यरत्न - एकैक पक्षे (iii) ...............................ग्रथितम्, तथापि(सः) काकः(स्व) न तु (iv)......................|

**मञ्जूषा**- चञ्चुदेशे, राजहंसः, काकस्य, मणीनाम्

**उत्तराणि:-** (i) काकस्य (ii) चञ्चुदेशे  (iii) मणीनाम्  (iv) राजहंस

**भावार्थ:**अस्य श्लोकस्य भाव: अस्ति यदि काकस्य शरीरं (i) ................................ गवेत तस्य चञ्चुदेशे ( ii ) ........................... अपि भवेत् तथापि सः राजहंसः न मन्यते अपितु काकः एव भवति। एवमेव यदि (iii) ............................. पक्षाः मणिभिः अपि ग्रथिताः भवेयुः तथापि सः (iv) .........................एव तिष्ठति। राजहंस: तु भवितुं नार्हति।

उत्तराणि:- ( i ) स्वर्णस्य  (ii)माणिक्यरत्न  (iii) काकस्य (iv) काकः

(13) हंसः श्वेतः बकः श्वेतः को भेदः बकहंसयोः ।
नीर क्षीर विवेके तु हंसो हंसः बको बकः॥

अन्वय हंसः श्वेतः( i ) .....................श्वेतः(ii) .........................कः भेदः? नीर क्षीर विवेके तु (iii).................................... हँस: बकः(iv).......................................|

**मञ्जूषा**:- बकहंसयो: बकः, हंसः , बकः

**उत्तराणि:** ( i ) बक:  (ii) बकहंसयोः  (iii) हंसः  (iv) बकः

भावार्थ: - यदि हंसस्य वर्णः (i)...........................भवति तथा बकस्य वर्णः अपि श्वेतः भवति, तदा तयोः (ii).............................कः भेदः भवति । अस्य ज्ञानम् नीरक्षीरविवेके भवति अर्थात (iii)..................................नीर क्षीरविवेके भवति परन्तु (iv) .................................. एतादृशम् सामर्थ्यम् न भवति ।

**उत्तराणि:-** (i) श्वेतः (ii) बकहंसयो:, (ii) श्वेत: (jv) हंसः

(14) काकः कृष्णः पिकः कृष्ण: को भेदः पिककाकयोः ।
वसन्तसमये प्राप्ते , काकः काकः पिकः पिकः ||

अन्वयकाक:(i)..........................पिकःकृष्णः(ⅱ)................................कः भेदः ?
वसन्तसमये(iii)............................काकः काक: (iv).............................पिकः ।

**मञ्जूषा**:- पिककाकयोः, पिकः, कृष्णः , प्राप्ते

**उत्तराणि -** (ⅰ) कृष्ण: (ii) पिककाकयोः (iii) प्राप्ते (iv) पिकः

भावार्थ: : पिकस्य काकस्य च वर्णः कृष्णः भवति । परन्तु यदा (i) ...........................आगच्छति तदा पिकस्य मधुरेण स्वरेण ज्ञायते यत् द्वयोः मध्ये कः (ii)..............................अस्ति अन्यथा द्वयोः एव वर्णः कृष्णः एव भवति । काकस्य श्वरः (iii)..........................भवति तथापि सः सर्वम् वर्षम्‘का-का’ इति करोति एतद् विपरीतं (iv)............................वर्णः मधुरः कर्णप्रियः च भवति परन्तु सः केवलं वसन्ते एव कूजति न तु अन्यथाकालम् ।

**उत्तराणि -** (ⅰ) वसन्तकाल : (ii) भेदः (iii) कर्णकटुः (iv) पिकस्य

(15) आयुषः क्षणमेकोऽपि, न लभ्यः स्वर्णकोटिकैः ।
स चेन्निरर्थकं नीतः, का नु हानिस्ततोऽधिका ।।

अन्वय:- आयुषः एकः (i)............................... अपि स्वर्ण कोटिकैः
न(ii).............................सचेत
(iii) नीतः ततः (iv)..............................नु हानिः का ? ।

**मञ्जूषा**:- लभ्यः, अधिका, क्षणम्, निरर्थकम्

**उत्तराणि:-** (ⅰ) क्षणम् (ii) लभ्य: (ⅲ) निरर्थकम् (iv) अधिका

भावार्थ:- अस्माकं(ⅰ).........................अमूल्य अस्ति । अतः अस्माभिः (ⅱ)..............प्रत्येकंक्षणस्य सदुपयोगः कर्तव्यः। यतो हि क्षण (iii)...................अपि पुनः न शक्यते। गतः समयः न पुनः आगच्छति । अतः क्षणनाशाद अधिका कोऽपि अन्या (iv)......................न अस्ति ।

**उत्तराणि:-** (ⅰ) जीवनम् (ii) आयुषः (iii) स्वर्णकोटिकैः (iv) हानिः

(16) अधुना रमणीया हि, सृष्टिरेषा जगत्पतेः ।
सर्वेऽत्र मोदन्तां, भावयन्तः परस्परम् ॥

अन्वय:- एषा (ⅰ) .................................. सृष्टिः हि अधुना (ii) ....................................
सर्वे (iii) .........................................अत्र परस्परम् (iv) ....................मोदन्तम्।

**मञ्जूषा**:- जीवाः, भावयन्तः, जगत्पतेः, रमणीया

**उत्तराणि:-** (i) जगत्पते: (ii) रमणीया (iii) जीवा: (iv) भावयन्तः।

भावार्थ: अधुना (1).......................... -इयम् सृष्टिः रमणीया (ii)...........................खलु । अतः अत्र सर्वे (iii).................................ईर्ष्या द्वेषं विस्मृत्य परस्परम् (iv).......................... प्रसन्नाः भवन्तु ।

**उत्तराणि:-** (i) ईश्वरस्य(ii) मनोहरा (iii) प्राणिन: (iv) भावयन्त :

## 4. आज्ञा गुरुणाम हि अविचारणीया

(17) तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः।
तद्गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत् ॥ ||

अन्वय: तस्मातयत्रगृहे( i )......................................अकारणः कलहः (ii) ...............................जीवितं............................(iii)तत् गृहं (iv)..............................परिवर्जयेत् ।

**मञ्जूषा**:- दूरतः , वाञ्छन्, स्यात, नित्यम्

**उत्तराणि:-** (i) नित्यम् (ii) स्यात् (iii) वाञ्छन् (iv) दूरतः

भावार्थ: - यदि कश्चित नरः ( i )..............................इच्छति तर्हि सः तत् (ii)................................अवश्यमेव त्यजेत् यत्र नित्यम् (iii).............................. भवति । यतो हि (iv)................................ कलह: सर्वदा विनाशस्य कारणं भवति |

उत्तराणि ( i ) सुखी जीवनम् (ii) गृहम् (iii) कलहः (iv) अकारणः

कलहान्तानि हर्याणि कु वाक्यान्तं च सौहृदम् ।
कु राजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥

अन्वयहर्याणि(i)............................ (भवन्ति), सौहृदं च (ii)........................(भवति) राष्ट्राणि कुराजान्तानि (भवन्ति), (iii)........................यशःच (भवति) (iv).................(भवति) |

**मञ्जूषा**: कुकर्मान्तं, कलहान्तानि, कुवाक्यान्त, नृणां

**उत्तराणि:-** ( i ) कलहान्तानि (ii) कु वाक्यान्तम्(ii) नृणां (iv) कुकर्मान्तम्

भावार्थः अस्ति यत् ( i ) ............................ राजप्रासादा: नश्यन्ते। कुवाक्यै: अपभाषणेन वा (ii) ..........................नश्यते। एवमेवदुष्टनृपै:(iii) ..............................नश्यन्ते कुकर्मणा च (iv)................................यश: विनष्टं गच्छति।

**उत्तराणि-**(1) विवादै: (ii) मैत्री (iii) राष्ट्राणि (iv) मनुण्याणां

मित्ररूपाः हि रिपव: सम्भाष्यन्ते विचक्षणैः ।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविन: ॥

ये हितं(i)..............................उत्सृज्यविपरीत (ii) ..............................(ते) विचक्षणै (iii).................................... हि (jv).............................सम्भाष्यन्ते।

**मञ्जूषा**: मित्ररुपाः, उपसेविन: रिपवः, वाक्यम्

उत्तराणि- (i) वाक्यम् (ii) उपसेविन: (iii) मित्ररुपा: (iv) रिपवः

भावार्थः - अस्ति यत्( i ) ...................एतादृशाणि मित्राणि अपि (ii) ....................कथ्यन्ते ये हितकराणि (iii)............................परित्यज-विपरीतं (iv).............................|

उत्तराणि ( i ) विद्धदिभः (ii) रिपव: (iii) वाक्यानि (iv) सेवन्ते

# प्रसङ्गानुसारं समुचितार्थचयनम्

1. स्वाध्याभ्यसनं चैव **वाङ्मयं** तप: उच्यते ।
   क साहित्यम् ख वाचिकम् ग मनोमयम् घ तपस्या
2. आचार्यात् **पादम्** आदत्ते ।
   क श्लोकस्य पङ्क्ति: ख चरणम् ग चतुर्थांशम् घ हस्त:
3. **माधुर्यम्** अक्षरव्यक्ति: पदच्छेदस्तु सुस्वर: ।
   क शर्करायुक्तम् ख कोमलवर्णोच्चारणम् ग मधुरताया: अभाव: घ मधुरम्
4. **सर्वदा** सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात् ।
   क सर्वं ददाति इति ख सर्वाधिका ग सर्वं वदति इति घ सर्वथा
5. राज्ञ: दानशीलताम् **आकर्ण्य** जना: तं देशमायान्ति स्म ।
   क मत्वा ख श्रुत्वा ग प्राप्य घ दत्वा
6. राज्ञ: नेत्रदानार्थं निश्चयं ज्ञात्वा अमात्या: **विषण्णा:** भूत्वा अवदन् ।
   क विमुखा: ख खिन्ना: ग प्रसन्ना: घ सुखिन:
7. यदि भवान् प्रीत: तदा त्वत: एकस्य **चक्षुष:** दानम् इच्छामि ।
   क श्रोत्रस्य ख गात्रस्य ग नेत्रस्य घ पात्रस्य
8. एकदा राजा **सरोवरस्य** समीपे विहरति ।
   क तडागस्य ख नगरस्य ग नद्या: घ ग्रामस्य
9. न **अयं** चिरं परिक्लेशम् अनुभवितुम् अर्हसि ।
   क एष: ख स: ग तत् घ एतत्
10. **सकलं** ब्रह्माण्डं व्याकुलं सञ्जातम् ।
    क सम्पूर्णम् ख परिपूर्णम् ग गभीरम् घ अपूर्णम्
11. **मेध्यम्** अमेध्यं सर्वमेव भक्षयति ।
    क मेधाविनम् ख अभक्षणीयम् ग विशुद्धम् घ शुद्धम्
12. अस्माकं **ऐक्यं** तु जगत्प्रसिद्धम् ।
    क एकता ख भिन्नता ग क्रूरता घ वीरता
13. काकस्य **गात्रं** यदि काञ्चनस्य ।
    क गोत्रम् ख कुटुम्बम् ग शरीरम् घ पात्रम्
14. आपत्काले सरांसि त्यक्त्वा दूरं **व्रजसि** ।
    क वदसि ख भजसि ग गच्छसि घ आयासि
15. बक: मीनान् छलेन **अधिगृह्य** क्रूरतया भक्षयति ।
    क गृहीत्वा ख खादित्वा ग त्यक्त्वा घ नीत्वा
16. मेष: **महानसं** प्रविश्य यत् पश्यति तद् भक्षयति ।
    क हयशालाम् ख मन्दिरम् ग पाकशालाम् घ पाठशालाम्
17. कलहन्तानि **हर्म्याणि** कुवाक्यान्तं च सौहृदम् }

क राजभवनानि　　ख उद्यानानि　　ग मन्दिराणि　　घ आपणानि

18. अन्यस्मिन् **अहनि** महानसं प्रविष्ट: मेष: सूपकारेण ताडित: ।
क रात्रौ　　ख मार्गे　　ग दिवसे　　घ नगरे

19. तस्य **क्षितौ** प्रलिठत: तृणेषु वह्निज्वाला: समुत्थिता: ।
क मार्गे　　ख भूमौ　　ग पाकशालाम्　　घ राजभवने

20. **सपदि** उपाय: क्रियताम् ।
क एकपदेन　　ख पादेन सह　　ग झटिति　　घ विलम्बेन

21. चञ्चलं हि मन: कृष्ण ! **प्रमाथि** बलवत्-दृढम् ।
क मथनशीलम्　　ख चिन्तनशीलम्　　ग गुणवत्　　घ दोषवत्

22. ध्यायत: विषयान् **पुंस:** सङ्गस्तेषूपजायते ।
क मित्रस्य　　ख पुरुषस्य　　ग शिक्षकस्य　　घ जनस्य

23. तस्मात् त्वम् **आदौ** इन्द्रियाणि नियम्य पाप्मानं प्रजहि ।
क सर्वप्रथमम्　　ख रात्रौ　　ग यदा-कदा　　घ एकदा

24. अभ्यासेन तु **कौन्तेय** वैराग्येण च गृह्यते ।
क भीम:　　ख अर्जुन:　　ग नकुल:　　घ युधिष्ठिर:

25. क्रोधाद् भवति **सम्मोह:** ।
क उद्विग्नता　　ख निर्धनता　　ग व्याकुलता　　घ प्रसन्नता

26. किम् इदं **घोरम्** आपतितम् ।
क पत्रम्　　ख पर्णम्　　ग भयङ्करम्　　घ दायित्वम्

27. **समीचीनं** न कृतं भवता ।
क घृणितम्　　ख वञ्चनम्　　ग उचितम्　　घ अनादरम्

28. पवन: **स्तब्ध:** जात:।
क आरब्ध:　　ख स्थगित:　　ग प्रदूषित:　　घ पतित:

29. द्वादश **समा:** पर्यजन्य: तद् राष्ट्रं नाभिवर्षति ।
क मासा:　　ख वर्षाणि　　ग दिनानि　　घ निशा:

30. **पर्यजन्य:** द्वादश समा: तद् राष्ट्रं नाभिवर्षति ।
क इन्द्र:　　ख शक्र:　　ग मेघ:　　घ देवेन्द्र:

31. सन्धिं **प्रकल्प्य** कलशं गृहाभ्यन्तरे क्षिप्तवान् ।
क चिन्तयित्वा　　ख रचयित्वा　　ग कथयित्वा　　घ चोरयित्वा

32. प्रचुरमणिमाणिक्यानाम् **आभया** भासमानं गृहं अपश्यताम् ।
क प्रकाशेन　　ख सूर्येण　　ग अग्निना　　घ चित्रेण

33. आपदां **तरणि:** धैर्यम् ।
क सूर्य:　　ख तरणम्　　ग नौका　　घ घटिका

34. **झटिति** एव क्षेत्रं गत: ।

क सहसा　　ख शीघ्रम्　　ग विलम्बेन　　घ अकस्मात्

35. विषादं त्यक्त्वा **उद्यम:** क्रियताम् ।

क परिश्रम:　　ख प्रयत्न:　　ग प्रयोग:　　घ प्रयास:

36. य: इच्छत्यात्मन: **श्रेय:** प्रभूतानि सुखानि च ।

क श्रेष्ठ:　　ख कल्याणम्　　ग सम्पत्तिम्　　घ समर्थनम्

37. तदैव **आहु:** महात्मान: समत्वमिति तथ्यत: ।

क कथयन्ति　　ख शृण्वन्ति　　ग चिन्तयन्ति　　घ हसन्ति

38. **वाक्पटु:** धैर्यवान् मन्त्री सभायामप्यकातर: परै: न परिभूयते ।

क निपुण:　　ख उत्तम: श्रोता　　ग वाक्कुशल:　　घ दर्शनकुशल:

39. त्यक्त्वां धर्मप्रदां वाचं **परुषां** योऽभ्युदीरयेत् ।

क कठोराम्　　ख कोमलाम्　　ग प्रयुक्ताम्　　घ साधारणाम्

40. स विवेक इति **ईरित:** ।

क दृष्ट　　ख कथित:　　ग श्रुत:　　घ लिखित:

## पाठाधारित-कथापूर्ति:

**1. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां कथां पुनः लिखत -**

**मञ्जूषा**

| शक्रः, दानशीलतां, पुरतः राजा, तस्मै, प्रभावेन, अङ्गानां, भवतः, |
|---|

एकदा भगवान् बोधिसत्वः बहुजन्मार्जितपुण्यफलैः शिवीनाम i. ............... अभवत् | सः प्रजाः पुत्रवत् पालयति स्म| अथ कदाचित् दानशालासु विचरन् स राजा अचिन्तयत् " मम अर्थिनः तु धनलाभमात्रेण संतोषं भजन्ते | इदानीं सः शरीरस्य ii. ............. दानं कर्तुम् इच्छति स्म| अतः तस्य iii. .................. परीक्षितुं देवाधिपतिः iv. .................. नेत्रहीन याचकस्य रूपं धारयित्वा तत्पुरतः अवदत् - हे राजन ! v. ................. दानवीरताम् आकर्ण्य चक्षुप्राप्त्यर्थं भवत्समीपम् आगतोस्मि | अनन्तरं महीपालः नेत्रद्वयं vi. ............. अयच्छत् | किञ्चित् कालानन्तरं संतुष्टः शक्रः राज्ञःvii. .................... आगत्य वरयाचनार्थम् अकथयत् | राज्ञा नेत्रार्थ प्रार्थिते सति शक्रस्य viii. ................ आत्मनः सत्यपुण्यबलेन च सः दिव्यनेत्रद्वयम् प्राप्तम् |

**2. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां कथां पुनः लिखत-**

**मञ्जूषा**

| विविधैः, बालवाहनयोग्यं भाजनं, मेषाणां, महानशं, नगरे, पुत्राः, |
|---|

कस्मिन्श्चित् i. ................ चन्द्रो नाम भूपतिः प्रतिवसति स्म| तस्य ii. ...................... वानरक्रीडारताः वानरयूथं नित्यमेव iii. ............,,, भोजपदार्थैः पुष्टिं नयन्ति स्म| तस्मिन् राजगृहे iv. ..................... मेषयूथम् आसीत्| तेषां v. ................. मध्ये एको मेषः जिह्वालोलुपतया अहर्निशं vi. ................ प्रविश्य यत् पश्यति तद् भक्षयति | ते च सूपकाराः यत्किञ्चित् काष्ठं, मृण्मयं vii. ................ कांस्यताम्रपात्रं वा पश्यति तेन viii. ................... आशु ताडयन्ति स्म |

**3. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां कथां पुनः लिखत -**

| करवाणि, अहं, लोके, लोकयात्रा , याचकः,राजा, चक्षुषः पूरयित्वा, |
|---|

राजा उवाच - भगवन्! भवन्मनोरथां. ..................... आत्मानम् अनुगृहीतं कर्तुम् इच्छामि | आदिश्यतां किं ii. ........................... ? विप्रः अकथयत् - यदि भवान् प्रीतः, तदा त्वत्तः एकस्य iii. ..................... दानम् इच्छामि येन मम iv. ................... निर्बाधा भवेत् | तत् श्रुत्वा राजा अचिन्तयत् - “v. ..................... चक्षुर्दानं दुष्करमेव | नूनम् ईदृशं दानं इच्छन् अयं vi. ................... केनापि प्रेरितः स्यात् ! अथवा भवतु नाम किं बहु चिन्तनेन ?” इति विचार्य vii. ..................... अभाषत- “भो मित्र ! किमेकेन चक्षुषा viii. ................... भवते चक्षुर्द्वयमेव प्रयच्छामि इति |”

**4. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां संवाद-कथां पुनः लिखत -**

**मञ्जूषा**

| काकचेष्टा, ऐक्यं, काकः, अज्ञानं, भीतौ , मत्वा छात्राणां, मातरः |
|---|

काकः - अहो i. ................ भवत्याः ! अरे ! यस्य गृहस्य ii. ............. स्थित्वा आलपामि , जनाः प्रियस्य आगमनसङ्केतं iii. ................. हृष्यन्ति | किं बहुना ! अहं तु एतादृशः सत्यप्रियः यत् iv. ............... शिशून् कथयन्ति - “अनृतं वदसि चेत् v. ................. दशेत्|” अस्माकम् vi. .................. तु जगत्प्रसिद्धम्| सर्वथा जागरूकोऽहं vii. .................... कृते आदर्शः एव | किं न श्रुतं viii. ..................बकध्यानं श्वाननिद्रा तथैव च |

अल्पाहारी गृहत्यागी विद्यार्थि पञ्चलक्षणम्||

**5. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां कथां पुनः लिखत -**

**मञ्जूषा**

| कथं, उपायः, अर्धदग्धाः , क्षितौ, अश्वशालां, मेषः यावत्, प्राणत्राणाय |
|---|

अथ अन्यस्मिन् अह्नि स मेषो i. .................. महानसं प्रविशति तावत् सूपकारेण अर्ध ज्वलित काष्ठेन ताडितः | ऊर्णाप्रचुरः ii. ..................... वह्निना जाज्वल्यमानशरीरः निकटस्थाम् iii. ........................ प्रविशति दाहवेदनया च भूमौ लुठति | तस्य iv. ................. प्रलुठतः तृणेषु समुत्थिताः| ज्वालामाकुलाः अश्वाः v. ................. इतस्ततः अधावत् | तेषु केचिद् दग्धाः केचिद् vi. ...................... केचन च पञ्चत्वं गताः | दग्धां हयशालां विज्ञाय सविषादः राजा शालिहोत्रज्ञान् वैद्यान् आहूय अपृच्छत् - 'हा ! दग्धाः मे घोटकाः vii. ................ रक्षणीयाः? सपदि viii. .................... क्रियताम्| '

**6. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां कथां पुनः लिखत -**

**मञ्जूषा**

| श्रेयस्करम्, उद्दण्डः, विकलाङ्गो, ग्रामान्तरं , दुष्टबुद्धिना , वयसि, सुपथं, प्रेक्ष्य |
|---|

अस्ति कर्मपुरनाम्नि नगरे प्रच्छन्नभाग्य-नामधेयः कश्चित् कुमारः | बाल्ये i. .............................. विद्यापराङ्गमुखः स केनचित् दुष्टबुद्धिनाम्ना चौरेण सह चौर्यकर्मणि निरतः सञ्जातः| एकदा स ii. ....................... सार्धं कस्यचित् श्रेष्ठिनः गेहे धनहरणार्थं iii. ............................ प्रस्थितः |
अथ व्रजन्तौ तौ गर्तसङ्कुलेमार्गे क्रीडतः कान्श्चित् बालकान् iv. ............. अवदताम् - भो भो बालकाः ! कथमत्र नतोन्नते विषमे मार्गे क्रीडथ ? यदि कश्चित् गर्ते पतेत् तर्हि स v........................... भूत्वा चिरं क्लेशम् अनुभवेत् | तच्छ्रुत्वा तेषु कश्चित् vi...................... बालकः उवाच - अयि भो | यदि एवं तर्हि कथं भवन्तौ viii................ परित्यज्य अनेन कुपथेन गन्तुम् प्रवृत्तौ ? अपि इदं viii...............................?

**7. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां कथां पुनः लिखत -**

**मञ्जूषा**

| चिन्तया, कुमार्गम्, चक्षुषी, पापपथं , ग्रामाभिमुखं विषादं, दृष्ट्वा, वृत्तान्तं |
|---|

बालकस्य वचसा प्रति हतान्तः करणः प्रच्छन्न भाग्यः अचिन्तयत्- किम् इदं वचनं विशेषेण मां एव लक्ष्यीकरोति ? अहो ! i. .................आश्रितस्य मम कीदृशी इयं क्लेशपरम्परा | गुरूपदेशेन इव अनेन बालवचसा मम ii. ............... समुन्मीलिते | अद्य आरभ्य iii. .......................त्यजामि इति विचिन्त्य मित्रं दुष्टबुद्धिम् अवदत् 'सखे ! यदि मां मित्रस्थाने परिगणयसि, तर्हि साधुजनगर्हितम् इमं पन्थानं त्यजतु भवान् |'
दुष्टबुद्धिः तु तस्य सद्वचनानि तिरस्कृत्य iv. .................प्राचलत् | प्रच्छन्नभाग्यः तु समुपजातविवेकः स्वगृहं प्रतिनिवृतः| गृहे तस्य भार्या सपदि समागतं पतिं v. .....................अपृच्छत्

- आर्य ! किं सर्वगतं कुशलं वर्तते ? अयथा कालं समागतोऽसि| सम्प्रति धर्ममतिः सः पश्चात्तापेन दग्धमानसः सर्वं vi. ............. निवेद्य सकरुणम् उच्चैः अक्रन्दत्| बुद्धिमती सा अवदत् - अलं vii. ............| आपदां तरणिः धैर्यम् | इदानीम् viii. ................ त्यक्त्वा उद्यमः क्रियताम् |

**8. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां संवाद-कथां पुनः लिखत -**

**मञ्जूषा**

| लामासंप्रदायस्य, कृषिपर्व, 'मोपीन', शालिचूर्णं 'साडकेन', अवसरे, 'ओरिया', प्रमुखोत्सवाः |
|---|

पर्यटनाधिकारी - साधु पृष्टम् | अत्र अनेके i. ................ | 'वाङ्ग्चो' जनजातीनाम् प्रमुखं पर्व ii. .................... इति अस्ति | एतत् तु फरवरी इति मासे मान्यते | अस्मिन् iii. ............... कृषिभूमिपूजनं सेतुनिर्माणं च सामाजिकं कार्यं क्रियते | 'मोपीन' इति अपि iv. ...................अस्ति | देवानामपि देवः v. ................. इति कथ्यते | 'होली' सदृशम् एव पर्व इदम् | जनाः परस्परम् मुखे कपोले च vi. ................ लिम्पन्ति | इदम् 'अप्रैल' इति मासे मान्यते | 'ओणम्' पर्वसमं vii. ................ एकम् अन्यत् पर्व अस्ति | viii. ................... 'लोसर' इति प्रमुखं पर्व अपि 'फ़रवरी' इति मासे संपद्यते |

**9. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां संवाद-कथां पुनः लिखत -**

**मञ्जूषा**

| इमानि, उद्गमस्थलम् , 'परशुरामकुण्डम्', पठितम्, दूरे, ब्रह्मकुण्डम् प्रकाशितां, |
|---|

नीलिमा - मान्यवर ! मया अस्य प्रदेशस्य i. ............................ इति दर्शनीयस्थलविषये अपि ii. ..........................| किम् इदम् ?

पर्यटनाधिकारी - आम् | एतत् कुण्डं तु लोहितनद्याः किञ्चिद् iii. ................. अस्ति | पूर्वम् इदम् iv. ....................... आसीत् |इदं लोहितनद्याः v. ......................... इति मन्यते | अत्र अनेकानि अन्यानि दर्शनीयानि vi. .................. अपि सन्ति | अस्माकं पर्यटनविभागेन vii. ............... केषाञ्चित् प्रसिद्धस्थालानां सूचीं पठित्वा ज्ञायताम् viii. ,,,,,,,,,,,,, पर्यटनस्थलानि यथा मालिनीथान- मन्दिरम्, इटानगरदुर्गम् , आकाशी-गङ्गा च |

**10. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां संवाद-कथां पुनः लिखत -**

**मञ्जूषा**

| जगत्, एतौ, सहस्रान्शुः, उल्काः, वर्धमानाः, एताभ्यां, निजास्त्रे, मही |
|---|

नारदः - (व्यासं प्रति) पश्यतु भवान् | कोऽयम् अनर्थः क्रियते i. ........................ वीराभ्याम् |
समन्तात् ii. .............................प्रचण्डानलशिखाः आकाशं लिहन्ति इव |गगनात् सहस्रशःiii.
......................... भूमौ पतन्ति | कम्पते खलु सपर्वत-वन-द्रुमा सकला iv. .......................| पवनः
स्तब्धः जातः | v. .......................... न भासते | शैलाः विदीर्यन्ते | कथमपि vi.
.......................... निवार्णियौ, अन्यथा सकलं vii. ........................ ध्वस्तं भविष्यति |
व्यासनारदौ - भो वीरौ ! संहरतं संहरतम् viii. .................... |

**11. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां कथां पुनः लिखत -**

**मञ्जूषा**

| दम्पती, निजगृहं, वार्तां, विषधरं, आवृत्य, मारयितुम्, गृहाभ्यन्तरे, बहिः |
|---|

दुष्टबुद्धिः तु तयोः i. ................ श्रुत्वा झटिति एव क्षेत्रं गतः | तत्र अश्वथमूलं खनित्वा तं सुवर्णकलशं प्राप्तवान् | यदा स तस्य आवरणम् अपसारयति तदैव भयङ्करम् एकं ii. ...................... फूत्कारं कुर्वन्तं पश्यति | भीतः स कलशं पुनः iii. ............................ तं च आदाय मित्रस्य गृहं समागतः | स्वमित्रं सर्पेण iv. .......................... इच्छन् सः भित्तौ संधिं प्रकल्प्य तन्मध्यतः कलशं v. ........................... क्षिप्तवान् |

विचित्रा खलु दैवगति | पतितात् कलशाद् vi. ................... निर्गत्य विषधरः तमेव दुष्टबुद्धिं दष्टवान् | कलशपातशब्देन प्रबुद्धौ तौ vii. .......................... आश्चर्येण प्रचुरमणिमाणिक्यानाम् आभया भासमानं viii. ....................... दृष्ट्वा परस्परम् अवलोकयन्तौ अतिष्ठताम् |

**12. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयित्वा च अधोलिखितां कथां पुनः लिखत -**

**मञ्जूषा**

| प्रत्यारोपणाय, शक्रः, नेत्रमपि, अर्हसि, यथास्थानम्, परित्राणाय याचकाय, नीलोत्पलम् |
|---|

नाहं स्वर्गं न मोक्षं कामये किन्तु आर्तानां i. .............................. एव मे निश्चयः |
अस्य याञ्चा वृथा मा अस्तु इत्युक्त्वा स राजा वैद्योक्त विधिना ii. ........................ इव एकं चक्षुः शनैः अक्षतम् उत्पाट्य प्रीत्या iii. ....................... समर्पितवान् | सः अपि तत् नेत्रं iv. ................... अस्थापयत् | ततो महीपालः द्वितीयं v. ........................ शनैः निष्कास्य तस्मै अयच्छत् | अथ विस्मितः vi. ......................... अचिन्तयत् -
अहो धृतिः ! अहो सत्त्वम्!
अहो सत्त्वहितैषिता !
नायं चिरं परिक्लेशम् अनुभवितुम् vii. ................. | अतः प्रयतिष्ये चक्षुषोऽस्य पुनः viii. ................... इति |

# केन्द्रीय विद्यालय संगठन

## आदर्श प्रश्नपत्रम्-1

**कक्षा-दशमी** **विषय:- संस्कृतम्**

**समय:-3होरा:** **पूर्णाङ्का: - 80**

**सामान्यनिर्देशाः-**

1. कृपया सम्यकतया परीक्षणं कुर्वन्तु यत् अस्मिन् प्रश्नपत्रे 13 पृष्ठानि मुद्रितानि सन्ति ।
2. कृपया सम्यकतया परीक्षणं कुर्वन्तु यत् अस्मिन् प्रश्नपत्रे 18 प्रश्नाः सन्ति ।
3. अस्मिन् प्रश्नपत्रे चत्वारः भागाः सन्ति |

   'क' भाग: अपठितावबोधनम् अङ्काः 10

   'ख' भाग:रचनात्मक कार्यम् अङ्काः15

   'ग' भाग:अनुप्रयुक्तव्याकरणम्अङ्काः 25

   'घ' भागः पठितावबोधनम् अङ्काः30
4. सर्वेषां प्रश्नानाम्उत्तराणि संस्कृतेन लेखनीयानि ।

**'क' भागः (अपठितावबोधनम्)10** अङ्काः

1. अधोलिखितान् गद्यांशान् पठित्वा प्रदत्त प्रश्नानाम् उत्तराणि संस्कृतेन लिखत-

आदि कालादेव अस्माकं देशः भारतं जगति प्रसिद्धम अस्ति। भारतस्य प्रतिष्ठे द्वे - संस्कृतं - संस्कृतिस्तथा। संस्कृतभाषा अस्य प्राचीन ज्ञानविज्ञानयो:पोषिका महत्संस्कृतेः च संवाहिका अस्ति। कथ्यते अपि भारतीयासंस्कृतिः संस्कृते एव निहिता वर्तते। विविधतायाम् एकता एव अस्माकं संस्कृतेः प्रधानम् अभिधानम् | यथा अत्र जनानां विविधाः सम्प्रदायाः, विविधाः भाषा:, पूजापद्धतयः वेशभूषाः च सन्ति परम् अनेकतायाम् अपि एकतायाः मधुरा धारा प्रवति। न केवलम् एतावदेव अपितु अस्य देशस्य प्रकृतिः अपि विविधतां धारयति । अस्मिन् देशे सर्वे ऋतवः क्रमेण आगच्छन्ति । ते च वसन्तः ग्रीष्मः वर्षा शरद् हेमन्तःशिशिर: इति । अत्र भिन्न भिन्न भाषाभाषिणः मतावलम्बिनः सर्वे भारतीयाः एकं राष्ट्रध्वजं नमन्ति एकं राष्ट्रगानं च गायन्ति। एते राष्ट्रिय - उत्सवान् सामाजिक- उत्सवान् च मिलित्वा आयोजयन्ति। भारतस्य वैशिष्ट्यमेतद् सर्वदा निरन्तरं च भवेद् इति सर्वे: भारतीयैः काम्यते । भारतं पुनः विश्वगुरुं कर्तुं सर्वे भारतीयाः प्रयतन्ते।

**अ. -एकपदेन उत्तरत - (केवलं प्रश्न द्वयम )1x2 = 2**

(i) प्राचीन ज्ञानविज्ञानयो: पौषिका का भाषा ?

(ii) अस्माकं देश के क्रमेण आगच्छन्ति ?

(iii) आदिकालादेव कः देश: जगति प्रसिद्धम् अस्ति ?

**आ.पूर्णवाक्येन लिखत - (केवल प्रश्न द्वयम् ) 2X2= 4**

(i) भारतीयाः किं कर्तुं प्रयतन्ते?

(ii) अस्माकं संस्कृते: प्रधानम् अभिधानं किम्?

(iii) सर्वे: भारतीयैः किं काम्यते ?

**इ. अस्य अनुच्छेदस्य कृते उपयुक्तं शीर्षकं संस्कृतेन लिखत ।** **1**

**ई. यशानिर्देशम् उत्तरत - (केवलं प्रश्नत्रयम् )** **1X3=3**

(i) 'धारयति' इति क्रियापदस्य कर्तृपदं किं भवेत्?

(क) विविधताम् (ख) एतावदेव (ग)केवलम् (घ)प्रकृतिः

(ii) 'प्रधानम्' इति विशेषणपदस्य विशेष्यपदं किम्?

(क) संस्कृतेः (ख) अभिधानम् (ग) विविधतायाम् (घ)एकता

(iii) 'अस्माकं देश: भारतं जगति प्रसिद्धम् अस्ति।'अत्र किं क्रियापदम्?

(क) भारतम् (ख) जगति (ग) अस्ति (घ) देश:

(iv) ' विविधतायाम्' इति पदस्य किं पर्यायपदं गयांशे प्रयुक्तम् ?

(क) अनेकतायाम् (ख) एकतायाः (ग) भारतीया: (घ)सम्प्रदाया:

**'ख' भागः**

**(रचनात्मकं कार्यम्) अङ्काः15**

**2. भवान् ललितः । भवान् गत-परीक्षायाम् उत्तीर्णः । एतम् उपलक्ष्य पुस्तकं प्रेषितवते मित्राय लिखिते धन्यवाद - पत्रे रिक्तस्थानानि मञ्जूषास्थ-पदैः पूरयत -** $\frac{1}{2}$ **x 10 = 5**

त्यागनगरम्

मुम्बईत:

तिथिः .........................

प्रियमित्र (i) .......... !

सप्रेम नमस्कारः ।

अत्र सर्वं (ii) ... ....... | तत्राप्यस्तु इति प्रार्थये | अहं गतपरीक्षायां समीचीनान्
(iii) .........प्राप्य उत्तीर्णं इत्युपलक्ष्ये बहूनि विविधानि पारितोषिकानि
(iv) .......... ।तेन अहं तुष्टः तथापि भवता प्रेषितं (v)...........इति पुस्तकं न केवलं मम बुद्धयै अपितु (vi)........... अपि उपकारकं भविष्यति इत्यत्र नास्तिकोऽपि सन्देहः । अस्मिन् (vii)............. भवत्सदृश मित्राणि विरलानि सन्ति ।(viii).............आत्मानं भाग्यवन्तं मन्ये| भवत: (ix).........मम प्रणामाः। भूयोभूयो धन्यवादः ।

भवतः प्रियमित्रम्

(x)........................

**-मञ्जूषा -**

**3.प्रदत्तं चित्रं दृष्टवा मञ्जूषायां प्रदत्तशब्दानां सहायतया पञ्च वाक्यानि संस्कृतेन लिखत -**

| जीवनाय, अङ्कान्, प्रियव्रत, मातापितृभ्यां, ललितः, कुशलम्,आगतानि,अहम्,काले,नीतिकथा: |
|---|

1 x 5 = 5

**मञ्जूषा**

| चिकित्सकाः, परिचारिकाः , उपवाहनानि, क्रेनयानेन, भीषणदुर्घटनायाः, रेलयानस्य, पतितानि ,दुर्घटनायां ,व्रणितम्, विपत्तौ, आवश्यकता । |
|---|

**अथवा**

मञ्जूषात: पदानि विचित्य पञ्चवाक्येषु एकम् अनुच्छेदं लिखत ।

*प्रातः भ्रमणम्*

**मञ्जूषा:-**

| रुग्णः, वर्धते, व्यायामः, अहम्, चतुर्दशवर्षीयः एकः, प्रात:- भ्रमणेन, मया, कस्मिन्, चत्वारि । |
|---|

**4. अधोलिखितां कथां मञ्जूषायाः सहायतया पूरयित्वा पुन: लिखत -** $\frac{1}{2}$x 10 = 5

एकस्मिन् वने एक: विशाल: (i).........................आसीत् | तस्मिन् बहवः खगाः वसन्ति स्म। एकदा ते अतीव (ii)......................... आसन् | अत: भोजनं (iii).................. इतस्ततः भ्रमन्ति स्म । ते दूरं दूरं गच्छन्ति स्म ।अन्ते च एकस्मिन् क्षेत्रे (iv) .................. अपश्यन् | ते तत्र गत्वा प्रसन्नतया तण्डुलान् खादन्ति स्म । परन्तु (v).............. बद्धाः अभवन् | अधुना किं (vi) ................ इति चिन्तयित्वा ते सर्वे जालेन सह एव एकं (vii)...............उपागच्छन् । तेषां मित्रं एकम् (viii)................. आसीत्। सः जालं (ix).............अकर्तयत् । अन्ते सर्वे स्वतंत्राः भूत्वा अनृत्यन् अगायन् च- सुखं तु (X) .......................

**- मञ्जूषा-**

| | |
|---|---|
| दन्तैः, | करणीयम्, |
| बुभुक्षिताः, | वृक्षः, |
| खादितुम्, | एकतायाम् |

अथवा

**रिक्तस्थानानि पूरयित्वा अधोलिखित संवादं पुन: लिखत -** $\frac{1}{2}$×10=5

**अध्यापिका** - वसन्त ! किं त्वं किञ्चित् (i)............इच्छसि ?

**वसन्तः -** (ii)............. महोदये ! अहं प्रष्टुम् इच्छामि

यत् कोकिलः कदा गायति ?

**अध्यापिका -** कोकिलः (iii)................ गायति (iv)..........वसन्तागमनं भवति । सुमेध ! कथय !

तमः (v)..........नाश्यति ?

**सुमेधा -** (vi)...............! यदा (vii)................उदयति तमः तदा नश्यति |

**अध्यापिका -** अतिशोभनम् ! मयूरा: कदा (viii)..................

**भास्करः**-अहं वदामि। यदा मेघाः गर्जन्ति तदा |

**अध्यापिका -** शोभनम् ! कथयत् (ix)................कदा नृत्यन्ति ?

सर्वैः - वयं (x) ............. | यदा वृष्टिः भवति, कृषकाः नृत्यन्ति |

---

**“ ग ” भागः**

(अनुप्रयुक्तव्याकरणम्) 25 अङ्काः

**(5) अधोलिखितवाक्येषु रेखाङ्कितपदेषु संधिं सन्धि वा कुरुत ( केवलं प्रश्न चतुष्टयम् )**

**1 x 4 = 4**

(1) संसारे <u>सदाचारस्य + एव</u> महत्त्वं वर्तते |

(2) शिक्षकस्य <u>प्रियच्छात्रः</u> सुधीरः अस्ति |

(3) यत् करणीयं <u>तत् + श्रूयताम्</u> |

(4) अस्माभिः <u>शिष्टाचारः</u> पालनीयः |

(5) सिंहं दृष्ट्वा <u>मृगोऽपि</u> धावति |

**(6) अधोलिखितवाक्येषु रेखाङ्कितपदानां समासं विग्रहं वा प्रदत्तविकल्पेभ्यः चित्वा लिखत -**

**( केवलं प्रश्नचतुष्टयम् ) 1x4= 4**

(1) <u>रागेणसमम्</u> न दुःखम् अस्ति |

<u>(क)</u> रागसमः (ख) रागसमम् (ग) सरागः (घ) सरागम्

(2) <u>अष्टाध्यायी</u> महामुनेः पाणिनेः कृतिः |

(क) अष्ट अध्यायानां समाहारः (ख) अष्ट अध्यायाः समाहारः

(ग) अष्टानाम् अध्यायानां समाहारः (घ) अष्टभिः अध्यायानां समाहारः

(3) अर्थिनां <u>विरलां संख्यां</u> विलोक्य राजा अचिन्तयत् |

(क)विरलसंख्याम् (ख) विरलंसंख्याम् (ग) विरलासंख्याम् (घ) विरलसंख्यम्

(4) <u>महापुरुषः</u> सर्वैः पूजनीयः भवति |

(क)महान् पुरुषाः (ख) महान्तः पुरुषः (ग) महत् पुरुषः (घ) महान् पुरुषः

(5) मम सखी <u>विद्युत् इव चञ्चला</u> अस्ति |

(क) विद्युच्चञ्चला (ख) विद्युत्चञ्चला (ग) विद्युत् चञ्चला (घ)विद्युच्चञ्चलम्

**(7) अधोलिखित वाक्येषु रेखाङ्कित पदानां प्रकृति - प्रत्ययौ संयोज्य विभज्य वा उचिताम् उत्तरम् विकल्पेभ्यः चित्वा लिखत - ( केवलं प्रश्नचतुष्टयम् ) 1x4= 4**

(1) दग्धाःघोटकाः कथं <u>रक्ष + अनीयर्</u> |

(क) रक्षितव्याः (ख) रक्षणीयम् (ग) रक्षणीयाः (घ) रक्षणीयः

(2) कोलाहलः न <u>कर्तव्यः</u> |

(क) कृ + तव्य (ख) कृत + तव्यत् (ग) कृ + तव्यत् (घ) कर्त + यः

(3) गुरुं <u>सेव् + शानच्</u> छात्रः प्रसन्नः अस्ति |

(क) सेवमाना (ख) सेवमानम् (ग) सेवमानः (घ) सेवमान

(4) एषा मम <u>पुत्र + ङीप्</u> क्रीडति |

(क) पुत्रा (ख) पुत्री (ग) पुत्रीम् (घ) पुत्र

(5) <u>गच्छन्तं</u> बालकं पश्य |

(क) गम् + शतृ (ख) गच्छ् + आन् (ग) गच्छ् + अन्तम् (घ) गम+ शतृ

**(8) वाच्यानुसारम् उचितपदैः रिक्तस्थानानि पूरयित्वा अधोलिखितं संवादं पुनः लिखत - ( केवलं प्रश्नत्रयम् ) 1x3= 3**

**आदित्यः** इदानीं त्वया किं क्रियते ! वैभव - ?

**वैभवः** आदित्यः अधुना तु मया .................. क्रियते | का वार्ता ?

**आदित्यः** नास्ति विशेषः .............. क्रीडितुं बहिः गम्यते, त्वमपि आगच्छ |

**वैभवः** न | श्वः मम परीक्षा भविष्यति अतः अद्य ............. संपूर्णदिने पठामि |

**आदित्यः** अस्तु, किन्तु त्वं किं पठसि ?

**वैभवः** गणितविषयस्य परीक्षा भविष्यति अतः मया गणितविषयः .............

**(9) कालबोधकशब्दैः अधोलिखित - दिनचर्यां पूरयत - ( केवलं प्रश्नत्रयम् ) 1x3 = 3**

(1) महेशः प्रातः .................... 05:00 वादने उत्तिष्ठति |

(2) ततः सः .................... 06:15 वादने योगाभ्यासं करोति |

(3) तदनन्तरं सः .......... 7:45 वादने विद्यालयं गच्छति |

(4) ............ 2:30 वादने आगत्य सः पुनः भोजनं करोति |

**(10) अधोलिखितवाक्येषु रिक्तस्थानानि कोष्टकेभ्योः चित्वा उचित - अव्ययपदैः पूरयत | ( केवलं प्रश्न चतुष्टयम् ) 1x4 = 4**

(1) दग्धाः अश्वाः ........... अधावन् |

(क) तथा (ख) मा (ग) विना (घ) इतस्ततः

(2) महिपालः द्वितीयं नेत्रम् ................ तस्मै ददौ |

(क) तथा (ख) इव (ग) अपि (घ) उच्चैः

(3) आर्त्तानां परित्राणाय ........... मे निश्चयः |

(क) एव (ख) इव (ग) वृथा (घ) उच्चैः

(4) मनसः निग्रहं वायोः ................. सुदुष्करम् |

(क) एव (ख) इव (ग) अपि (घ) उच्चैः

(5) 'गुरुः' इति शब्दस्य कोऽर्थः ? ..................... आचार्य एव |

(क) नूनम् (ख) सहसा (ग) अपि (घ) यदि

**(11) अधोलिखितवाक्येषु रेखाङ्कित पदम् अशुद्धम् अस्ति | प्रदत्त विकल्पेभ्यः उचितम् उत्तरं चित्वा अशुद्धपदं संशोध्य लिखत - ( केवलं प्रश्नत्रयम् ) 1x3= 3**

(क) जनाः ह्यः आपणं <u>गमिष्यन्ति</u> |

(1) गमिष्यावः (2) अगच्छन् (3) गच्छानि (4) अगच्छताम्

(ख) सः <u>बालिका</u> क्रीडति |

(1) बाला (2) बालकः (3) बालकौ (4) बालिके

(ग) त्वं कदा नाटकं <u>द्रक्ष्यन्ति</u> ?

(1) पश्यन्ति (2) पश्यावः (3) द्रक्ष्यसि (4) पश्यतः

(घ) त्वम् मम <u>मित्रः</u> असि |

(1) मित्रम् (2) मित्रौ (3) मित्रा (4) मित्राः

## " घ " भागः

(पठितावबोधनम् ) 30 अङ्काः

**(12) अधोलिखितान् गद्यांशान् पठित्वा तदाधारितानां प्रश्नानामुत्तराणि लिखत - 5** अङ्काः

अनेन वचसा प्रतिहतान्तः करणः प्रच्छन्नभाग्यः अचिन्तयत् - किम् इदम् वचनं विशेषेण माम् एव लक्ष्यीकरोति? अहो! कुमार्गम् आश्रितस्य मम कीदृशी इयं क्लेशपरम्परा | गुरूपदेशेन इव अनेन बालवचसा मम चक्षुषी समुन्मीलिते | अद्य आरभ्य पापपथं त्यजामि इति विचिन्त्य मित्रं दुष्टबुद्धिम् अवदत् 'सखे! यदि मां मित्रस्थाने परिगणयसि, तर्हि साधुजनगर्हितम् इमं पन्थानं त्यजतु भवान् |' दुष्टबुद्धिः तु तस्य सद्वचनानि तिरस्कृत्य ग्रामाभिमुखं प्राचलत् | प्रच्छन्नभाग्यः तु समुपजातविवेकः स्वगृहं प्रतिनिवृत्तः|

**I. एकपदेन उत्तरत** $\frac{1}{2}$x 2 = 1

(i) अद्यप्रभृति पापपथं त्यजामि | इति कः अचिन्तयत् ?

(ii) कीदृशः प्रच्छन्नभाग्यः स्वगृहं प्रतिनिवृत्तः?

**II पूर्णवाक्येन उत्तरत -** 1 x 2 = 2

(i) सद्वचनानि तिरस्कृत्य दुष्टबुद्धिः कुत्र अगच्छत् ?

(ii) बालवचसा प्रच्छन्नभाग्यः कीदृशः अभवत्?

**III निर्देशानुसारम् उत्तरत -** 1 x 2= 2

(i) 'चक्षुषी' इति कर्तृपदस्य क्रियापदं किम् अस्ति ?

(ii) अनुच्छेदे 'पन्थानम्' इति विशेष्यपदस्य विशेषणपदम् अस्ति |

(iii) अनुच्छेदे **'निन्दितम् '**इति पदस्य पर्यायः कः ?

**(13)अधोलिखितश्लोकान् पठित्वा श्लोकाधारितानां प्रश्नानाम् उत्तराणि निर्देशानुसारं लिखत-**

5 अङ्काः

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं सः युक्तः स सुखी नरः ॥

**I. एकपदेन उत्तरत- (केवलं प्रश्न द्वयम् )** $\frac{1}{2}$x 2 = 1

(i) कस्य विमोक्षणात् प्राक् नरः कामक्रोधोद्भवं वेगं सोढुं शक्नोति ?

(ii) नरः कीदृशं वेगं सोढुं शक्नोति ?

(iii) यः क्रोधस्य वेगं जीवने सहते सः कीदृशः नरः ?

**II. पूर्णवाक्येन उत्तरत- (केवलं प्रश्न द्वयम् )**1 x 2 = 2

(i) कः युक्तः सुखी च भवति ?

(ii) कामक्रोधोद्भवं वेगं नरः कुत्र सहते ?

(iii) देहत्यागात् पूर्वं नरः किं सहते ?

**III. निर्देशानुसारम् उत्तरत- (केवलं प्रश्न द्वयम् )**1 x 2 = 2

(i) 'पूर्वम्' इत्यर्थे अत्र किं पदं प्रयुक्तम् ?

(ii) 'नरः' इति पदस्य विशेषणं किम् ?

(iii) 'पश्चात्' इति पदस्य विपरीतार्थम् पदं किम् प्रयुक्तम् ?

**(14) अधोलिखितं नाट्यांशं पठित्वा निर्देशानुसारं प्रश्नानाम् उत्तराणि लिखत - 5 अङ्काः**

**काकः -** ( प्रविश्य, सक्रोधम् ) आः ! किम् उक्तवति भवति ? यदि अहं कृष्णवर्णः तर्हि श्रीरामस्य वर्णः कीदृशः ? श्रीवासुदेवस्य वर्णः कीदृशः ? मुग्धे ! अहं तु अतीव कर्तव्यपरायणः । प्रभाते 'का-का' ध्वनिना सुप्तान् प्रबोधयामि कर्मसु च विनियोजयामि ।

**राजहंसः -** हुं! किमनेन ? एतत् कार्यं तु कुक्कुटोऽपि करोति ।

**काकः -** (विहस्य) कुक्कुट! अरे! अद्य कुतः कुक्कुटाः नगरेषु । अहमेव सर्वत्र सुलभः।

**राजहंसी -** भोः भो वाचाल! स्वीयैः कटुभिः क्वणितैः जनजागरणात् अन्यत् तु किमपि न करोषि ?

**काकः -** अहो अज्ञानं भवत्याः! अरे! यस्य गृहस्य भित्तौ स्थित्वा आलपामि, जनाः प्रियस्य आगमनसंकेतं मत्वा हृष्यन्ति । किं बहुना! अहम् तु एतादृशः सत्यप्रियः यत् मातरः शिशून् कथयन्ति -"अनृतं वदसि चेत् काकः दशेत्। " अस्माकम् ऐक्यं तु जगत्प्रसिद्धम् । सर्वथा जागरूकोऽहं छात्राणाम् कृते आदर्शः एव । किं न श्रुतं काकचेष्टा, बकध्यानम्:"

**I. एकपदेन उत्तरत- (केवलं प्रश्न द्वयम्)**$\frac{1}{2}$x 2 = 1

(i) अद्य कुक्कुटः कुत्र न सुलभः ?

(ii) कर्त्तव्यपरायणः कः अस्ति ?

(iii) केषाम् ऐक्यम् जगत्प्रसिद्धम् ?

**II. पूर्णवाक्येन उत्तरत- (केवलं प्रश्न द्वयम्)**1 x 2 = 2

(i) जना: किमर्थं हृष्यन्ति ?

(ii) काकस्य विषये मातरः शिशून् किं कथयन्ति ?

(iii) कीदृशः काकः छात्राणाम् कृते आदर्शः एव अस्ति?

**III. निर्देशानुसारम् उत्तरत- (केवलं प्रश्न द्वयम् )**1 x 2 = 2

(i) 'करोति' इति क्रियापदस्य कर्तृपदं किम् ?

(ii) 'सत्यं' इति पदस्य विलोमपदं नाट्यांशे किं प्रयुक्तम् ?

(iii) 'अस्माकम् ऐक्यं ' अत्र 'अस्माकं' सर्वनामपदं केभ्यः प्रयुक्तम्?

**(15) अधोलिखित - कथनेषु स्थूलपदानि आधृत्य उदाहरणानुसारं प्रश्ननिर्माणं क्रियताम् -**

**1 x 5= 5**

**यथा -**राजा**नगरस्य** समन्ततः दानशालाः अकारयत् |

राजा **कस्य** समन्ततः दानशालाः अकारयत् ?

(क)अभीष्ट वस्तूनि प्राप्य **याचकाः** संतुष्टाः आसन् |

(ख)**दानशालासु** विचरन् राजा अचिन्तयत् |

(ग) राज पुत्रवत् **प्रजाः** पालयति स्म |

(घ) स राजा **तान्** अकथयत् |

(ङ) राजा **याचकेभ्यः** दानं ददाति स्म |

**(16) मञ्जूषातः उचितपदानि चित्वा अधोलिखित श्लोकस्य अन्वयं पूरयित्वा पुनः लिखत -** $\frac{1}{2}$**x 4 = 2**

(क) त्यक्त्वा धर्मप्रदां वाचं परुषां योऽभ्युदीरयेत् ।

परित्यज्य फलं पक्वं भुङ्क्तेऽपक्वं विमूढधीः ॥

अन्वयः - यः (i) ..................... वाचं त्यक्त्वा (ii).......................... (वाचम्) अभ्युदीरयेत् (सः) विमूढधीः (iii) .................. फलं परित्यज्य (iv) .............(फलं) भुङ्क्ते ।

**मञ्जूषा-**

| पक्वं, परुषाम्, धर्मप्रदां, अपक्वं |
|---|

**अथवा**

**अधोलिखित श्लोकानाम् भावार्थ: मञ्जूषातः उचितपदानि चित्वा रिक्तपूर्तिः कुरुत-**

(क) अवक्रता यथा चित्ते तथा वाचि भवेद् यदि।

तदेवाहुः महात्मानः समत्वमिति तथ्यतः ।।

भावार्थः- यथा (i) ....... सरलता स्यात् तथैव (ii) ............. अपि सरलता भवेत् तदा एव (iii) ................ वास्तविकरूपेण तत् (iv)...............इति कथयन्ति ।

**मञ्जूषा-**

| महात्मानः, समत्वम्, हृदये, वाण्याम् |
|---|

**(17) अधोलिखितपङ्क्तिषु स्थूलाक्षरपदानाम् प्रसङ्गानुसारं शुद्धम् अर्थं चिनुत् -**

( केवलं प्रश्नचतुष्टयम् ) 1 x 4 = 4

**(क)**मेषः **महानसं** प्रविश्य यत् पश्यति तद् भक्षयति |

(1) हयशालाम् (2) मन्दिरम् (3) पाकशालाम्

**(ख)**'कलहान्तानि**हर्म्याणि** कुवाक्यान्तं च सौहृदम्|

(1) राजभवनानि (2) उद्यानानि (3) मन्दिराणि

**(ग)** 'अन्यस्मिन्**अहनि** महानसं प्रविष्टः मेषः सुपकारेण ताडितः |'

(1) रात्रौ (2) मार्गे (3) दिवसे

**(घ)** 'तस्य**क्षितौ** प्रलुठतः तृणेषु वह्निज्वालाः समुत्थिताः'|

(1) मार्गे (2) भूमौ (3) पाकशालायाम्

**(ङ)**'**सपदि** उपायः क्रियताम्|'

(1) एकपदेन (2) पादेन सह (3) झटिति

**(18) अधोलिखित-कथां रिक्तस्थानानि पूरयित्वा पुनः लिखित** $\frac{1}{2}$x 8 = 4

कस्मिंश्चित् (i) ................... चन्द्रो नाम भूपतिः स्म | तस्य (ii) .............. वानर-क्रीडारताः वानरयूथं नित्यमेव विविधैः भोज्यपदार्थैः पुष्टिं नयन्ति स्म (iii) .................... राजगृहे बालवाहनयोग्यं मेषयूथम् आसीत् | तेषां (iv) ................ मध्ये एको मेषः जिह्वालोलुपतया अहर्निशं महानसं प्रविश्य यत् पश्यति तद् भक्षयति | ते च सूपकाराः यत्किञ्चित् काष्ठं, मृण्मयं (v) ................ कांस्यताम्रपात्रं वा पश्यन्ति तेन तम् आशु ताडयन्ति स्म | मेषस्य सूपकाराणां च (vi) ................ अवेक्ष्य नीतिविदाम् अग्रणीः वानरयूथपतिः अचिन्तयत् - 'एतेषां कलहो न (vii) ................ हिताय | 'एवं विचार्य स यूथपः सर्वान् कपीन् आहूय रहसि अवदत् -सूपकाराणां मेषेण सह एषः कलह नूनं (viii) ................ विनाशकारणं भविष्यति |

**मञ्जूषा**

| भजनं , नगरे , भवतां , तस्मिन् , मेषाणां , पुत्राः , कलहम् , वानराणां |
|---|

# केन्द्रीय विद्यालय संगठन

## आदर्श प्रश्नपत्रम्-2

कक्षा-दशमी विषय:- संस्कृतम्

समय:-3होरा: पूर्णाङ्काः - 80

**निर्देशाः**

**i) अस्मिन् प्रश्नपत्रे चत्वारः खण्डाः सन्ति।**

**ii) प्रत्येकं खण्डम् अधिकृत्य उत्तराणि क्रमेण लेखनीयानि।**

**iii) प्रश्न संख्या प्रश्नपत्रानुसारम् अवश्यमेव लेखनीया।**

**iv) सर्वेषां प्रश्नानाम् उत्तराणि संस्कृतेन लेखनीयानि।**

**खण्डः क अपठित - अवबोधनम् 10 अंकाः**

**1 अधोलिखितम् अनुच्छेदं पठित्वा प्रदत्त प्रश्नान् संस्कृतेन उत्तरत 10**

कालिदासः मेघदूतं रचितवान्। मेघदूते मानसून विज्ञानस्य अद्भुतं वर्णनम् अस्ति। मानसूनसमयः आषाढमासात् प्रारभ्यते। श्याममेघान् दृष्ट्वा सर्वेजनाः प्रसन्नाः भवन्ति। मयूराः नृत्यन्ति। मानसूनमेघाः सर्वेषां जीवानां कष्टम् अपहरन्ति। मेघानां जलं वनस्पतिभ्यः पशुपक्षिभ्यः किं वा सर्वेभ्यः प्राणिभ्यः जीवनं प्रयच्छति। मेघजलेन भूमेः उर्वराशक्तिः वर्धते क्षेत्राणां च सेचनं भवति। गगने यदा - कदा इन्द्र धनुः अपि दृश्यते। वायुः शीतलः भवति। शुष्क भूमौ वर्षायाः बिन्दवः पतन्ति। भूमेः सुगन्धितं वाष्पं निर्गच्छति। कदम्ब पुष्पाणि विकसन्ति। तेषु भ्रमराः गुञ्जन्ति। हरिणाः प्रसन्नाः भूत्वा इतस्ततः धावन्ति। चातकाः जलबिन्दून् पिबन्ति। बलाकाः पङ्क्तिं बद्ध्वा आकाशे उड्डयन्ते। मेघदूते मेघः यक्षस्य सन्देशं नयतु इति प्रार्थितः। अतः कालिदासः वायुमार्गस्य ज्ञानवर्धकं वर्णनं करोति।

**(i) एकपदेन उत्तरत - (केवलं प्रश्न द्वयम्) 1x2=2**

(अ) भ्रमराः कुत्र गुञ्जन्ति ?

(आ) मेघानां जलं प्राणिभ्यः किं प्रयच्छति ?

(इ) केन क्षेत्राणां सेचनं भवति ?

**(ii) पूर्णवाक्येन उत्तरत- (केवलं प्रश्न द्वयम्) 2x2=4**

(अ) कालिदासः किं रचितवान् ?

(आ) बलाकाः कथम् आकाशे उड्डयन्ते ?

(इ) मेघदूते किं प्रार्थितः ?

**(iii) अस्य गद्यांशस्य कृते उचितं शीर्षकं लिखत। 1x1=1**

**(iv) प्रदत्त विकल्पेभ्यः उचितम् उत्तरं चित्वा लिखत - (केवलं प्रश्न त्रयम्) 1x3 = 3**

(अ). मेघदूतं क: रचितवान् ? रचितवान् इति क्रिया पदस्य किं कर्तृ पदं प्रयुक्तम् ?

(क) कालिदासः (ख) भारविः (ग) भर्तृहरिः

(आ) 'मयूराः' इति पदस्य किं क्रियापदम् ?

(क) पक्षिणः (ख) नृत्यन्ति (ग) अस्ति

(इ) मेघानां जलं केभ्यः जीवनं प्रयच्छति ?

(क) वनस्पतिभ्यः (ख) पशुपक्षिभ्यः (ग) सर्वेभ्यः

(ई) 'मृगाः' इति पदस्य किं पर्यायपदं प्रयुक्तम् ?

(क) मेघः (ख) नगरंप्रति (ग) हरिणाः

**खण्डः ख रचनात्मकंकार्यम् (15 अङ्काः)**

**2. भवतः अनुजः तनिष्कः पठनं त्यक्त्वा चलदूरभाषयत्रेण क्रीडने सर्वदा व्यस्तः भवति। तं पठनार्थं प्रेरयन् लिखितं पत्रं मञ्जूषायां प्रदत्तैः पदैः पूरयित्वा पुनः लिखत - 1/2×10=5**

परीक्षा भवनात्

तिथिः .............

प्रिय (i) ............. !

शुभाशीषः।

ह्यः एव मातुः (ii).............प्राप्तम्। माता अद्यत्वे पठने तव (iii)......दृष्ट्वा चिन्तिता अस्ति। त्वं पठनं त्यक्त्वा चलदूर भाषयन्त्रेण (iv) ............ रतः भवसि। अर्धवार्षिक-परीक्षायाम् अपि तव न्यूनाः (v) ............. आगताः। एतत् तु न (vi).............। यद्यपि क्रीडनम् अपि (vii)............. आवश्यकं परं तत् शारीरिकं भवेत्। क्रीडनेन सह पठनम् अपि अत्यावश्यकम्। ये चलदूरभाषयन्त्रेण अत्यधिकं समयं वृथा यापयन्ति ते न केवलं (viii)............. अस्वस्थाः भवन्ति अपितु जीवने असफलाः अपि। अतः मम (ix)............. अस्ति यत् समयस्य महत्त्वम् अवगत्य (x) ............. ध्यानेन पठ। मातृपितृचरणयोः मे प्रणामाः कथनीयाः।

तवअग्रजः,

मोहितः

**मञ्जूषा**

**(त्वम्, मानसिकरूपेण, पत्रम्, स्वास्थ्याय, अरुचिम्, तनिष्क, अङ्काः, क्रीडने, उचितम्, परामर्शः)**

**3. प्रदत्तं चित्रं दृष्ट्वा मञ्जूषायां प्रदत्त शब्दानां सहायतया पञ्चवाक्यानि संस्कृतेन लिखत - 1x5=5**

**मञ्जूषा**

**(यज्ञपात्रम्, अग्निः, बालकाः, मन्त्रोच्चारणम्, विद्यालयः, श्रद्धया, आसनानि, तिष्ठन्ति, प्रज्वलति, भवनम्, पादपाः, यज्ञंकुर्वन्ति, महिलाः, जनः)**

अथवा

**निम्नलिखितं विषयम् अधिकृत्य मञ्जूषा प्रदत्त शब्दानां साहाय्येन पञ्चभिः संस्कृत वाक्यैः एकम् अनुच्छेदं लिखत - 1x5=5**

"दिल्ली-विश्वपुस्तकमेलकम्"

मञ्जूषा

**(प्रतिवर्षम्, प्रगतिमैदानइतिस्थले, फरबरी-मार्चमासे, विविधानिपुस्तकानि, आपणिकाः , आयोज्यते, जनसम्मर्दः, विभिन्नाःप्रकोष्ठाः, पुस्तकप्रेमिणः, साहित्यिक-गोष्ठ्यः, भवन्ति , सांस्कृतिककार्यक्रमाः, अल्पमूल्येन।)**

**4 अधोलिखितांकथांमञ्जूषायाःसहायतयापूरयित्वापुनःलिखत- 1/2x10 = 5**

एकःटोपिका विक्रेता आसीत्। सःएकदा (i).............विक्रेतुं ग्रामान्तरं गच्छन् आसीत्। (ii)............. सः श्रान्तः अभवत्, अतः (iii)............. अधः स्थित्वा शयनम् अकरोत्।तत्र बहवः वानराः आसन् । (iv)............. तस्य टोपिकाःस्वीकृत्य वृक्षस्य उपरि अतिष्ठन् । (v)............. टोपिका विक्रेता जागृतः अभवत् तदा सः टोपिकाः न दृष्ट्वा (vi)............. अभवत्। सः एकम् (vii).............अकरोत् । सः वानराणां पुरतः स्थित्वा स्वस्य टोपिकां दूरम् अक्षिपत्। (viii) ............. वानराः अपि स्वस्य स्वस्य टोपिकाः अधः (ix) ............. चतुरः टोपिका विक्रेता टोपिकाः एकत्रीकृत्य प्रसन्नः भूत्वा ततः (x) .............। अतः कथ्यते - बलात् बुद्धिः श्रेष्ठा ।

मञ्जूषा

**( अगच्छत्, अनुकरणशीलाः, वृक्षस्य, दुःखी, यदा, उपायम्, मार्गे, अक्षिपन्, टोपिकाः, ते )**

अथवा

**रिक्तस्थानानि पूरयित्वा अधोलिखित संवादं पुनः लिखत- 1x5=5**

